ननुवीतरागादिदोषाणांसंन्यासिनामपिनमत्तः परंकिंचिदस्तिकथमेषामपर्याप्तमित्यतआह तावदिति हेकृष्णरागादयस्तावदेवस्तेनाश्चौराभवंति तथातावद्गृहमपिकारागृहं बंधनागारम् मोहोऽपितावदेवांघ्रिनिगडः पादशृंखला यावत्तेत्वदीयाजनानभवंति त्वदीयानांतुरागादयोऽपित्वन्निष्ठामोचकाएवेतिनयतिप्योविशेषः भजनत्वधिकमितिभाव ३६ नन्वतएवअहमेषांपुत्रादिरूपेणवर्तेइतिचेत्तत्राह प्रपंचमिति प्रपन्नायाजनताजनसमूहस्तस्याआनंदानांसंदोहंसमूहंप्रथयितुमिति नहिकपटपुत्रत्वादिनाताहकृष्णकेतानृण्यंसंपद्यतइत्यर्थः ३७ तदेवमादितआरभ्याचिंत्यानंतगुणत्वेनस्वयंदुर्ज्ञेयत्वमुक्तम् केचित्तुजानीमइतिस्थितास्तान्प्रत्युपहसन्निवाह जानंतइति नतुमेमनआदीनांतववैभवंविषयइति ३८ जगदीशत्वाद्यभिमानंपरित्यज्याह अनुजानीहीति हेकृष्णमामनुजानीहि सत्यलोकंगंतुंअनुज्ञांदेहि स्वमहिमानमस्मदादीनांचज्ञानबलादिसर्वंत्वमेववेत्सि यतः सर्वदृक् जगतांनाथस्तत्त्वमेवेत्यैतावत्ज्ञानम् अतोममतास्पदंजगत् एतत्शरीरंचतवार्पितम् ३९ तदेवंकिंकरंप्रस्थापयेति अत्यादरेणनमस्करोति श्रीकृष्णेति वृष्णिकुलपद्मस्यप्रीतिदातृत्वेनहेसूर्योपम क्ष्माच अवनिः निर्जरादेवाश्चद्विजाश्चपशवश्चतएवउदधयस्तेषांवृद्धिकारित्वेनहेचंद्रोपम उद्धर्मःपाखंडधर्मस्तदेवशार्वरंतमः तद्धरतीतितथा अनेनद्वयोपम हेक्षि

तावद्रागादयस्स्तेनास्तावत्कारागृहंगृहम् तावन्मोहोऽङ्घ्रिनिगडोयावत्कृष्णनतेजनाः ३६ प्रपंचंनिष्प्रपंचोऽपिविडंबयसिभूतले प्रपन्नजनतानंदसंदोहंप्रथितुंप्रभो ३७ जानंतएवजानंतुकिंबहूक्त्यानमेप्रभो मनसोवपुषोवाचोवैभवंतवगोचरः ३८ अनुजानीहिमांकृष्णसर्वंत्वंवेत्सिसर्वदृक् त्वमेवजगतांनाथोजगदेतत्तवार्पितम् ३९ श्रीकृष्णवृष्णिकुलपुष्करजोषदायिन् क्ष्मानिर्जरद्विजपशूदधिवृद्धिकारिन् उद्धर्मशार्वरहरक्षितिराक्षसध्रुगाकल्पमार्कमर्हन्भगवन्नमस्ते ४० श्रीशुकउवाच इत्यभिष्टूयभूमानंत्रिःपरिक्रम्यपादयोः नत्वाभीष्टंजगद्धातास्वधामप्रत्यपद्यत ४१ ततोऽनुज्ञाप्यभगवान्स्वभुवंप्रागवस्थितान् वत्सान्पुलिनमानिन्येयथापूर्वसखिस्वकम् ४२ एकस्मिन्नपियातेऽब्देप्राणेशंचांतरात्मनः कृष्णमायाहताराजन्क्षणार्धंमेनिरेऽर्भकाः ४३ किंकिंनविस्मरंतीहमायामोहितचेतसः यन्मोहितंजगत्सर्वमभीक्ष्णंविस्मृतात्मकम् ४४ ऊचुश्चसुहृदःकृष्णंस्वागतंतेतिरंहसा नैकोऽप्यभोजिकवलएहीतःसाधुभुज्यतां ४५ ततोहसन्हृषीकेशोऽभ्यवहृत्यसहार्भकैः दर्शयन्चर्माजगरंन्यवर्ततवनाद्व्रजम् ४६ बर्हप्रसूननवधातुविचित्रितांगःप्रोद्दामवेणुदलशृंगरवोत्सवाढ्यः वत्सान्गृणन्ननुगगीतपवित्रकीर्तिर्गोपीदृगुत्सवदृशिःप्रविवेशगोष्ठम् ४७

तिराक्ष सध्रुक् क्षितौराक्षसाः कंसादयः उद्यन्नेवतेभ्योद्रुह्यतीतिपुनःसूर्योपम सूर्याद्युपमापिन्यूनेतिमत्वाह आर्कमर्कमभिव्याप्यसर्वेषामर्हन्पूज्यभगवन् आकल्पंकल्पपर्यंतंतेतुभ्यंनमइति ४० मसखिवत्सकमोक्षणकौतुकद्रुतविलंबितपुत्रसुदद्भुतम् निखिलरूपमतोदधदच्युतोऽवतुसवःकलयन्व्रजमंगलं १ पादयोर्नत्वा अभीष्टंसर्वतःपूजितमभिप्रेतंवा ४१ अनुज्ञाप्य अनुज्ञांप्रदाप्य एक्षेत्यर्थः स्वयंभुवंब्रह्माणं यथापूर्वंसखायोयस्मिन्तत्स्वकंपुलिनम् ४२ नन्वेतावंतंकालंकथंतत्रैवोपविष्टाः कथंचक्षुत्पिपासादिविस्मरणमतआह एकस्मिन्निति श्लोकद्वयेन अब्देपियातेप्राणेशंकृष्णमंतरांचविनाऽपिप्रियविरहेक्षणोऽपिवर्षादधिकोभवतितथाऽपिमायाहताः क्षणार्द्धंमेनिरे ४३ यत्ययामाययामोहितंजगदभीक्ष्णंपुनःपुनःविस्मृतात्मकम् विस्मृतःआत्मैवयेनतत्तथा ४४ अतएवमूचुश्चतत्वयाऽतिवेगेनस्वागतंसम्यगागतम् एकोऽपिग्रासस्त्वांविनाऽस्माभिर्नाभोजिनभुक्तः इतएहिसाधुअविक्षेपेणभुज्यतामिति ४५ अभ्यवहृत्य भुक्त्वा ४६ प्रोद्दामोवेण्वादित्तस्वरैरुत्सवस्तेनाढ्यःसंपन्नः गृणन्उपलालनैराह्वयन् गोपीदृशामुत्सवरूपादृशिर्दर्शनंयस्यसः ४७

यशोदानंदसूनुनेति बहूनामुक्तिः सहैव दर्शिता यद्वा केचिदाहुः यशोदासूनुना अपरेनंदसूनुनेति यद्वा यशोदां नंदयतीति यशोदानंदः सचासौसूनुश्चेति तथा तेनास्मात् महाव्याला
द्वयं चाविताः रक्षिताः ४८ व्रजौकसांस्वतोकेषु स्नेहवल्ल्याऽब्दमन्वहम् शनैर्निःसीमवद्ववृधे यथाकृष्णेत्वपूर्ववदित्यादिना स्वतोकेभ्योऽपि परपुत्रे कृष्णे प्रेमाधिक्यमुक्तम् तत्र पृच्छति
ब्रह्मन्निति ४९ श्रीकृष्णस्य साक्षादात्मत्वात्तस्मिन्नात्मीयेभ्यः प्रेमाधिक्यं युज्यत इति वक्तुं प्रथमं तावदात्मनः स्वतः प्रेष्ठत्वम् अन्येषां तु तदुपाधिकमिति दर्शयति पंचभिः सर्वेषामपी
ति ५० कुतः तथादर्शनादित्याह तदिति तस्मादेव कारणात् स्वस्वकात्मनि अहंकारास्पदेऽपि देहे आत्माध्यासतारतम्येन प्रेमतारतम्यं दृश्यमानं तन्निबंधनमेवेति दर्शयितुं मूढामूढभे
देन विशेषमाह देहात्मवादिनामिति द्वाभ्याम् तं देहमनु भवंति ये पुत्रादयस्ते तु न तथा प्रियतमा इत्यर्थः ५१ ५२ यद्यस्माज्जीर्यत्यपि आसन्नमरणेऽपि जीविताशा भवति अयं भावः न जी
विष्यतीति निश्चितेऽपि देहे यत्प्रेमास्पदत्वं तदात्मगतमेव संगच्छत इति अथवा यद्यस्मिन् देहे जीर्यत्यपि जीविताशा आविवेकदशायामासीत् साऽपि विवेकिनो यदा ममताभाक् भवति
तदा आत्मवत्प्रियो न भवति अतः तत्र नातीवास्थेति ५३ तदर्थमेव सकलं प्रियमित्यर्थः ५४ प्रस्तुतमाह कृष्णमेनमिति ५५ न केवलमात्मनामात्मा अपि तु जडानामपीत्याह वस्तुत इति

अघानेन महाव्यालो यशोदानंदसूनुना हतो विता वयं चास्मादिति बाला व्रजे जगुः ४८ राजोवाच ब्रह्मन्परोद्भवे कृष्णे इयान्प्रेमा कथं भवेत्
योऽभूतपूर्वस्तोकेषु स्वोद्भवेष्वपि कथ्यताम् ४९ श्रीशुक उवाच सर्वेषामपि भूतानां नृप स्वात्मैव वल्लभः इतरेऽपत्यवित्ताद्यास्तद्वल्लभतयैव हि
५० तद्राजेंद्र यथा स्नेहः स्वस्वकात्मनि देहिनाम् न तथा ममतालंबि पुत्रवित्तगृहादिषु ५१ देहात्मवादिनां पुंसामपि राजन्यसत्तम यथा देहः प्रि
यतमस्तथा न ह्यनु ये च तम् ५२ देहोऽपि ममताभाक् चेत्तर्ह्यसौ नात्मवत्प्रियः यज्जीर्यत्यपि देहेऽस्मिन् जीविताशा बलीयसी ५३ तस्मात्प्रियतमः
स्वात्मा सर्वेषामपि देहिनाम् तदर्थमेव सकलं जगदेतच्चराचरम् ५४ कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम् जगद्धिताय सोऽप्यत्र देहीवाभा
ति मायया ५५ वस्तुतो जानतामत्र कृष्णं स्थास्नु चरिष्णु च भगवद्रूपमखिलं नान्यद्वस्त्विह किंचन ५६ सर्वेषामपि वस्तूनां भावार्थो भवति स्थितः
तस्यापि भगवान् कृष्णः किमतद्वस्तु रूप्यताम् ५७ समाश्रिता ये पदपल्लवप्लवं महत्पदं पुण्ययशो मुरारेः भवांबुधिर्वत्सपदं परं पदं पदं पदं यद्विपदां
न तेषाम् ५८ एतत्ते सर्वमाख्यातं यत्पृष्टोऽहमिह त्वया यत्कौमारे हरिकृतं पौगंडे परिकीर्तितम् ५९ एतत्सुहृद्भिश्चरितं मुरारेरघार्दनं शाद्वलजे
मनं च व्यक्तेतरद्रूपमजोर्वभिष्टवं शृण्वन् गृणन्नेति नरोऽखिलार्थान् ६०

सर्वजगत्कारणमिति कृष्णं जानतां पुंसां स्थावरं जंगमं च सर्वं भगवद्रूपं भग
वानेव स्वरूपं यस्य तत् नान्यत् ५६ कुत इति तदाह सर्वेषामिति भावार्थः परमार्थः भवति भवत् परिणामं प्राप्नुवत् कारणं तस्मिन् तस्यापि भवतः कारणस्यापि भगवान् कृष्ण
एव कारणम् अतः किमतत् श्रीकृष्णव्यतिरिक्तम् वस्तु रूप्यताम् तस्माच्छ्रीकृष्णस्यैव परमार्थत्वात् तदेकशरणानामयत्नसिद्धो मोक्ष इति ५७ प्रकरणार्थमुपसंहरति समाश्रि
ता इति पुण्यं यशो यस्य स पुण्ययशाः सचासौ मुरारिश्च तस्य पदपल्लव एव प्लवः तं ये सम्यगाश्रिताः महत्पदं महतां पदमाश्रयम् यद्वा महच्च तत्पदं चेति तथा तेषां भवांबुधिर्वत्सपदमा
त्रं भवति किंच परं पदं श्रीवैकुंठाख्यं पदं स्थानं भवति विपदां यत्पदं विषयः तत्पुनः कदाचिदपि तेषां न भवति न ततः पुनरावर्तत इत्यर्थः ५८ ५९ सुहृद्भिश्चरितं मुष्णंतोऽन्योऽन्य
शिक्यादीनित्यादिना उक्तम् अघार्दनं च शाद्वलजेमनं भोजनं च व्यक्तेतरत् व्यक्तात् जडप्रपंचादितरत् शुद्धसत्वात्मकं वत्सवत्सपालरूपम् यद्वा व्यक्तेतरः चिद्विलासस्तं रूप्यत
इति रूपम् अजस्य उरुर्महान् अभिष्टवस्तवस्तं ब्रह्मकृतां स्तुतिम् एतत् शृण्वन् गृणन् गायन् नरः सर्वपुरुषार्थान् प्राप्नोति ६०

६१ इतिश्रीपरमानंदनृसिंहपदषट्पदः व्याकरोच्छ्रीधरस्वामीयथामातिविधिस्तुतिम् १ इतिदशमस्कंधेटीकायांचतुर्दशोऽध्यायः १४ ततःपंचदशेधेनुपालनंधेनुकार्दनम् का
लियस्त्वइतोगोपरक्षणंचनिरूप्यते १ अह्विवच्च प्रवेशेन वृथारविन्नान्सर्वानितः कृष्णःप्रावेशयत्पक्कफलंतालालिकाननम् २ पशुपालसंमतौपशुपालनेसंमतौ पशुपालानांवासंम-
तौईषद्योवलातिरेकमनुक्तनवंतोइत्यर्थः अतीवचक्रतुः सर्वतःप्रसर्पणेन १ स्वयशोगृणाद्भिर्गोपैर्वृतःतद्वनंप्राविशत् २ तद्वनंनिरीक्ष्यरंतुंमनोदधे कथंभूतम् मंजुघोषायेऽलिमृगाद्विजाः
भ्रमरमृगपक्षिणः तैराकुलंव्याप्तम् महन्मनःस्वच्छपयःसरस्वतामहतांमनसातुल्यंस्वच्छंपयोयस्मिन् तत्सरआश्रयत्वेन अस्तियस्यतेनवातेनेतिशैत्यमुक्तम् शतपत्रगंधिनेति परिमलव
त्त्वमुक्तंवनमितिमांद्यंसूचितम् ३ अरुणपल्लवश्रियासहस्पृशंत्यःशिखाःशाखाग्राणियेषांतान् ४ तरुजन्मयेनतमसाकृतंतस्यतमसःपापस्यअपहत्यैनाशाय अथवायेनत्व-

एवंविहारैःकौमारैःकौमारंजहतुर्व्रजे निलायनैःसेतुबंधैर्मर्कटोत्प्लवनादिभिः ६१ इतिश्रीभागवतेमहापुराणेदशमस्कंधेब्रह्मस्तुतिर्नामच
तुर्दशोऽध्यायः १४ श्रीशुकउवाच ततश्चपौगंडवयःश्रितौव्रजे बभूवतुस्तौपशुपालसंमतौ गाश्चारयंतौसखिभिःसमंपदैर्वृंदावनंपुण्य
मतीवचक्रतुः १ तन्माधवोवेणुमुदीरयन्वृतोगोपैर्गृणद्भिःस्वयशोबलान्वितः पशून्पुरस्कृत्यपशव्यमाविशद्विहर्तुकामःकुसुमाकरंवनम् २ त
न्मंजुघोषालिमृगद्विजाकुलंमहन्मनःस्वच्छपयःसरस्वता वातेनजुष्टंशतपत्रगंधिनानिरीक्ष्यरंतुंभगवान्मनोदधे ३ सतत्रतत्रारुणपल्लवश्रियाफल
प्रसूनोरुभरेणपादयोः स्पृशच्छिखान्वीक्ष्यवनस्पतीन्मुदास्मयन्निवाहाग्रजमादिपूरुषः ४ श्रीभगवानुवाच अहोअमीदेववरामरार्चि
तंपादांबुजंतेसुमनःफलार्हणम् नमंत्युपादायशिखाभिरात्मनस्तमोपहत्यैतरुजन्मयत्कृतम् ५ एतेऽलिनस्तवयशोऽखिललोकतीर्थंगायंतआदि-
पुरुषानुपदंभजंते प्रायोअमीमुनिगणाभवदीयमुख्यागूढंवनेऽपिनजहत्यनघात्मदैवम् ६ नृत्यंत्यमीशिखिनईड्यमुदाहरिण्यःकुर्वंतिगोप्यइवतेप्रिय
मीक्षणेन सूक्तैश्चकोकिलगणागृहमागतायधन्यावनौकसइयान्हिसतांनिसर्गः ७ धन्येयमद्यधरणीतृणवीरुधस्त्वत्पादस्पृशोद्रुमलताःकरजाभिमृ
ष्टाः नद्योद्रयःखगमृगाःसदयावलोकैर्गोप्योंतरेणभुजयोरपियत्स्पृहाश्रीः ८ श्रीशुकउवाच एवंवृंदावनंश्रीमत्कृष्णःप्रीतमनाःपशून् रे
मेसंचारयन्नद्रेःसरिद्रोधस्सुसानुगः ९ क्वचिद्गायतिगायत्सुमदांधालिष्वनुव्रतैः उपगीयमानचरितःस्रग्वीसंकर्षणान्वितः १० क्वचिच्चकलहंसानामनु
कूजंतिकूजितम् अभिनृत्यतिनृत्यंतंबर्हिणंहासयन्क्वचित् ११ मेघगंभीरयावाचानामभिर्दूरगान्पशून् क्वचिदाह्वयतिप्रीत्यागोगोपालमनोज्ञया १२

याईश्वरेणसर्वोपकारकंतरुजन्मकृतंतंत्वांनमंतीति एवंश्लाघ्येऽपिजन्मनियदज्ञानरूपंतमोऽस्तितस्यापहत्यै ५ हेअनघवनेगूढमपित्वांनत्यजंति त्वयिमनुष्यवेषेणनिगू
ढेसतिमुनयोऽप्यलिवेषेणनिगूढास्त्वांभजंतीत्यर्थः ६ इयान्हिसतांनिसर्गइतियदस्तिस्वस्मिन्तद्गृहमागतायमहतेमहत्पुरुषायसमर्पयंतीति ७ तृणवीरुधश्चतवपादौ
स्पृशंतीतितथा करजाभिमृष्टाःनखैःस्पृष्टाःसदयैरवलोकनैः श्रीरपियस्मैस्पृहयति केवलंतेनभुजयोरंतरेणवक्षसागोप्योधन्याइति ८ एवंश्रीमत्वृंदावनंप्रतिप्रीतःसन्
अद्रेःसमीपवर्तिसरित्तटेषुपशून्संचारयन्सानुगःगोपैःसहवर्तमानःप्रीतमनारेमे ९ तामेवरतिमाह क्वचिदित्यादिदशभिः १० बर्हिणंनृत्यंतमनुअभिनृत्यतिबर्हि
णमभिमुखोनृत्यतीतिवा सखीन्हासयन् ११ १२ श्रीगोपीजनवल्लभायश्रीकृष्णायनमः ५ ५ ५ ५ ५

चकोरादीननुकरोतीति कदाचिच्च सत्त्वानां मध्ये व्याघ्रसिंहयोः ताभ्यां भीतवद्द्रवति सत्त्वेषु पलायमानेषु पलायत इत्यर्थः तयोः सत्त्वानां बलोद्रेकाणां भीतवद्द्रवतीति वा १३ आर्य
मग्रजं विश्रमयति विगतश्रमं करोति १४ मिथो नृत्यादीन् कुर्वतो गोपान् प्रशशंसतुः १५ १६ व्यजनैः पल्लवादिनिर्मितैः १७ १८ ईशचेष्टित इति निगूढस्वभावत्वेऽपि अंतरांतरा
ईशस्यैव चेष्टितानि दृश्यंते यस्मिन् सः १९ २० ईशचेष्टितत्वमेव दर्शयितुमाह श्रीदामेति स्तोककृष्णः कश्चित् तालालिसंकुलं तालपंक्तिभिर्व्याप्तम् २१ २२ २३ २४ विषूचीनः

चकोरान् क्रौंचचक्राह्वभारद्वाजांश्च बर्हिणः अनुरोति स्म सत्त्वानां भीतवद्व्याघ्रसिंहयोः १३ क्वचित्क्रीडापरिश्रांतं गोपोत्संगोपबर्हणम् स्वयं विश्रमयत्यार्यं पादसंवाहनादिभिः १४ नृत्यतो गायतः क्वापि वल्गतो युध्यतो मिथः गृहीतहस्तौ गोपालान् हसंतौ प्रशशंसतुः १५ क्वचित्पल्लवतल्पेषु नियुद्धश्रमकर्शितः वृक्षमूलाश्रयः शेते गोपोत्संगोपबर्हणः १६ पादसंवाहनं चक्रुः केचित्तस्य महात्मनः अपरे हतपाप्मानो व्यजनैः समवीजयन् १७ अन्ये तदनुरूपाणि मनोज्ञानि महात्मनः गायंति स्म महाराज स्नेहक्लिन्नधियः शनैः १८ एवं निगूढात्मगतिः स्वमायया गोपात्मजत्वं चरितैर्विडंबयन् रेमे रमालालितपादपल्लवो ग्राम्यैः समं ग्राम्यवदीशचेष्टितः १९ श्रीदामा नाम गोपालो रामकेशवयोः सखा सुबलस्तोककृष्णाद्या गोपाः प्रेम्णेदमब्रुवन् २० राम राम महाबाहो कृष्ण दुष्टनिबर्हण इतोऽविदूरे सुमहद्वनं तालालिसंकुलम् २१ फलानि तत्र भूरीणि पतितानि पतंति च संति किंत्ववरुद्धानि धेनुकेन दुरात्मना २२ सोऽतिवीर्योऽसुरो राम हे कृष्ण खररूपधृक् आत्मतुल्यबलैरन्यैर्ज्ञातिभिर्बहुभिर्वृतः २३ तस्मात्कृतनराहाराद्भीतैर्नृभिरमित्रहन् न सेव्यते पशुगणैः पक्षिसंघैर्विवर्जितम् २४ विद्यंतेऽभुक्तपूर्वाणि फलानि सुरभीणि च एष वै सुरभिर्गंधो विषूचीनोऽवगृह्यते २५ प्रयच्छ तानि नः कृष्ण गंधलोभितचेतसाम् वांछाऽस्ति महती राम गम्यतां यदि रोचते २६ एवं सुहृद्वचः श्रुत्वा सुहृत्प्रियचिकीर्षया प्रहस्य जग्मतुर्गोपैर्वृतौ तालवनं प्रभू २७ बलः प्रविश्य बाहुभ्यां तालान् संपरिकंपयन् फलानि पातयामास मतंगज इवौजसा २८ फलानां पततां शब्दं निशम्यासुररासभः अभ्यधावत्क्षितितलं सनगं परिकंपयन् २९ समेत्य तरसा प्रत्यग्द्वाभ्यां पद्भ्यां बलं बली निहत्योरसि काशब्दं मुंचन् पर्यसरत्खलः ३० पुनरासाद्य संरब्ध उपक्रोष्टा पराक् स्थितः चरणावपरौ राजन् बलाय प्राक्षिपद्रुषा ३१ स तं गृहीत्वा प्रपदोर्भ्रामयित्वैकपाणिना चिक्षेप तृणराजाग्रे भ्रामणत्यक्तजीवितम् ३२ तेनाहतो महातालो वेपमानो महाशिराः पार्श्वस्थं कंपयन् भग्नः स चान्यं सोऽपि चापरम् ३३ बलस्य लीलयोत्सृष्टखरदेहहताहताः तालाश्चकंपिरे सर्वे महावातेरिता इव ३४ नैतच्चित्रं भगवति ह्यनंते जगदीश्वरे ओतप्रोतमिदं यस्मिंस्तंतुष्वंग यथा पटः ३५ ततः कृष्णं च रामं च ज्ञातयो धेनुकस्य ये क्रोष्टारोऽभ्यद्रवन् सर्वे संरब्धा हतबांधवाः ३६ तांस्तानापततः कृष्णो रामश्च नृप लीलया गृहीतपश्चाच्चरणान् प्राहिणोत्तृणराजसु ३७

सर्वतः प्रसृतः २५ २६ २७ २८ सनगं सवृक्षम् २९
प्रत्यग्द्वाभ्यां पश्चिमाभ्यां द्वाभ्याम् काशब्दमिति गर्दभजातिशब्दानुकरणम् पर्यसरत्परितोऽधावदित्यर्थः ३० उपक्रोष्टा गर्दभः पराक् प्रतिमुखः अपरौ पश्चिमौ बलाय बलं हंतुम् ३१ तृणराजः तालः ३२ ३३ उत्सृष्टेन खरदेहेन हतैराहताश्चकंपिरे अकंपंत ३४ यस्मिन्निदं विश्वमोतमूर्ध्वतंतुषु पट इव ग्रथितम्
प्रोतं तिर्यक्तंतुषु पटवदेव संग्रथितं सर्वतोऽनुस्यूतं वर्तत इत्यर्थः ३५ ३६ ३७ श्रीकृष्णाय नमः ५ ५ ५ ५

घनैर्नभस्तलमिवभूः रराज तत्र फलप्रकरसंकीर्णेति दैत्यदेहैः फलतालाग्रैश्च संकीर्णाइत्यरुणश्वेतनीलघनसादृश्यसंपादनम् ३८ ३९ आदन् अभक्षयन् ४०
४१ गोरजोभिः छुरितेषुकुंतलेषुबद्धंबर्हंवन्यानिप्रसूनानिचयस्यरुचिरमीक्षणंचारुहासश्चयस्यतंचतंच दिदृक्षितदृशः दिदृक्षितादर्शनोत्कंठायुक्ताहशोयासांताः
४२ मुकुंदस्यमुखपद्मगतंसारघमधुआन्हियोविरहस्तस्माज्जातंतापम् सचतासांसत्कृतिंपूजाम् कांसत्कृतिंकथंवाकृतांतामाह सव्रीडेति सव्रीडेनसलज्जेनहासे
नविनयोयथाभवतितथा यदेतत् किंतत् अपांगमोक्षंकटाक्षदर्शनम् तथातांसत्कृतिंप्राप्येति ४३ ४४ ४५ ४६ ४७ ४८ ४९ ५० संप्रतिसद्यएवइताप्राप्ता-

फलप्रकरसंकीर्णादैत्यदेहैर्गतासुभिः रराजभूःसतालाग्रैर्घनैरिवनभस्तलम् ३८ तयोस्तत्सुमहत्कर्मनिशम्याविबुधादयः मुमुचुःपुष्पव-
र्षाणिचक्रुर्वाद्यानितुष्टुवुः ३९ अथतालफलान्यादन्मनुष्यागतसाध्वसाः तृणंचपशवश्चेरुहतधेनुककानने ४० कृष्णःकमलपत्राक्षःपु-
ण्यश्रवणकीर्तनः स्तूयमानोनुगैर्गोपैःसाग्रजोव्रजमाव्रजत् ४१ तंगोरजश्छुरितकुंतलबद्धबर्हवन्यप्रसूनरुचिरेक्षणचारुहासम् वेणुं
क्वणंतमनुगैरनुगीतकीर्तिंगोप्योदिदृक्षितदृशोभ्यगमन्समेताः ४२ पीत्वामुकुंदमुखसारघमक्षिभृंगैस्तापंजहुर्विरहजंव्रजयोषितोऽन्हि
तत्सत्कृतिंसमधिगम्यविवेशगोष्ठंसव्रीडहासविनयंयदपांगमोक्षम् ४३ तयोर्यशोदारोहिण्योपुत्रयोःपुत्रवत्सले यथाकामंयथाकालंव्यध
त्तांपरमाशिषः ४४ गताध्वानश्रमौतत्रमज्जनोन्मर्दनादिभिः नीवींवसित्वारुचिरांदिव्यस्रग्गंधमंडितौ ४५ जनन्युपहृतंप्राश्यस्वाद्वन्नमु
पलालितौ संविश्यवरशय्यायांसुखंसुषुपतुर्व्रजे ४६ एवंसभगवान्कृष्णोवृंदावनचरःक्वचित् ययौराममृतेराजन्कालिंदींसखिभिर्वृतः
४७ अथगावश्चगोपाश्चनिदाघातपपीडिताः दुष्टंजलंपपुस्तस्यास्तृषातीविषदूषितम् ४८ विषांभस्तदुपस्पृश्यदैवोपहतचेतसः निपेतुर्व्य
सवःसर्वेसलिलांतेकुरूद्वह ४९ वीक्ष्यतान्वैतथाभूतान्कृष्णोयोगेश्वरेश्वरः ईक्षयामृतवर्षिण्यास्वनाथान्समजीवयत् ५० तेसंप्रतीतस्मृ
तयःसमुत्थायजलांतिकात् आसन्सुविस्मिताःसर्वेवीक्षमाणाःपरस्परम् ५१ अन्वमंसततद्राजन्गोविंदानुग्रहेक्षितम् पीत्वाविषंपरेतस्य
पुनरुत्थानमात्मनः ५२ इतिश्रीभागवतेमहापुराणेदशमस्कंधेधेनुकवधोनामपंचदशोऽध्यायः १५ श्रीशुकउवाच वि
लोक्यदूषितांकृष्णांकृष्णःकृष्णाहिनाविभुः तस्याविशुद्धिमन्विच्छन्सर्पंतमुदवासयत् १ राजोवाच कथमंतर्जलेगाधेन्य
गृण्हाद्भगवानहिम् सवैबहुयुगावासंयथासीद्विप्रकथ्यताम् २ ब्रह्मन्भगवतस्तस्यभूम्नःस्वच्छंदवर्तिनः गोपालोदारचरितंकस्तृ
प्येतामृतंजुषन् ३

स्मृतिर्यैस्तेसंप्रतीतस्मृतयः यद्वा सम्यक्प्रतीताप्रतिप्राप्तास्मृतिर्यैस्तेतथाइति ५१ ५२ इतिश्रीभागवतेमहापुराणेदशमस्कं
धेटीकायांपंचदशोऽध्यायः १५ षोडशेकालियस्योक्तोनिग्रहोयमुनाह्रदे तत्पत्नीभिःस्तुतेनाथकृष्णेनानुग्रहःकृतः १ हतारासभदेतयानुजग्धातालफला-
न्यलम् प्रीतोनृत्यत्फणारंगेकालियस्यकलानिधिः २ उदवासयत् निःसारितवान् १ बहूनियुगानिआवासोयस्यतमहिम् सवैआहिः अजलचरोऽपितस्मिन्नंतर्जलेयथा-
येनप्रकारेणासीत् अथवा बहूनियुगानिआवासोयथाभवतिनियातेनप्रकारेणसवैतत्रासीदितिकथ्यतामिति २ गोपालेनयदुदारमाचरितंतदेवामृतमतः कथ्यतामिति ३

श्रप्यमाणं पच्यमानं पयो यस्य सः अत उपरि गच्छंतः खगा यस्मिन् पतंति ४ किंच विप्रुष्मता अंबुकणयुक्तेन विषोदतरंगस्पर्शिमारुतेन स्पृष्टा यस्य तीरगा म्रियंते स ह्रद आसीदि-
ति ५ तं कालियं चंडो वेगो यस्य तत् दृष्टं विषमेव वीर्यं यस्य तं कदंबमिति भाविना श्रीकृष्णस्य चरणस्पर्शभाग्येन स एक एव तत्तीरे न शुष्कः अथवा अमृतमाहरता गरुत्मता आक्रांतत्वादिति
ति ५ ... ६ तदा सर्पस्य ह्रदः पुरुषश्रेष्ठस्य पतनभारेण संक्षोभितानां सुरगाणां विषेण ऊर्न्नतो अंबु
बुराशीनां तरम् आस्फोट्य बाहुं करतलेनाहत्य गाढा दृढा बद्धा रशना कटिबंधनवस्त्रं येन सः ६ तदा सर्पस्य ह्रदः पुरुषश्रेष्ठस्य पतनभारेण संक्षोभितानां सुरगाणां विषेण ऊर्न्नतो अंबु-
राशिर्यस्य सः विषेण कषायाः कृता भयंकरा ऊर्मयो यस्य सः पर्यक् परितः धनुः शतं प्लुतः प्रसृतः नैतावचित्रमित्याह अनंतबलस्येति ७ ह्रदे विहरतः भुजदंडाहतोदकघोषं श्रुत्वा



कालिंद्यां कालियस्यासीत् ह्रदः कश्चिद्विषाग्निना श्रप्यमाणपया यस्मिन् पतंत्युपरिगाः खगाः ४ विप्रुष्मता विषोदोर्मिमा-
रुतेनाभिमर्शिताः म्रियंते तीरगा यस्य प्राणिनः स्थिरजंगमाः ५ तं चंडवेगविषवीर्यमवेक्ष्य तेन दुष्टां नदीं च खलसंयमनावतारः कृष्णः कदंबमधिरु-
ह्य ततोऽतितुंगमास्फोट्य गाढरशनो न्यपतद्विषोदे ६ सर्पह्रदः पुरुषसारनिपातवेगसंक्षोभितोरगविषोच्छ्वसितांबुराशिः पर्यक् प्लुतो विषकषायविभी-
षणोर्मिर्धावन् धनुःशतमनंतबलस्य किं तत् ७ तस्य ह्रदे विहरतो भुजदंडघूर्णवार्घोषमंगवरवारणविक्रमस्य आश्रुत्य तत्स्वसदनाभिभवं निरी-
क्ष्य चक्षुःश्रवाः समसरत्तदमृष्यमाणः ८ तं प्रेक्षणीयसुकुमारघनावदातं श्रीवत्सपीतवसनं स्मितसुंदरास्यम् क्रीडंतमप्रतिभयं कमलोदरांघ्रिं संद-
श्य मर्मसु रुषा भुजया चच्छाद ९ तं नागभोगपरिवीतमदृष्टचेष्टमालोक्य तत्प्रियसखाः पशुपा भृशार्ताः कृष्णेऽर्पितात्मसुहृदर्थकलत्रकामा दुःखानुशोक-
भयमूढधियो निपेतुः १० गावो वृषा वत्सतर्यः क्रंदमानाः सुदुःखिताः कृष्णे न्यस्तेक्षणा भीता रुदत्य इव तस्थिरे ११ अथ व्रजे महोत्पातास्त्रिविधा ह्य-
तिदारुणाः उत्पेतुर्भुवि दिव्यात्मन्यासन्नभयशंसिनः १२ तानालक्ष्य भयोद्विग्ना गोपा नंदपुरोगमाः विना रामेण गाः कृष्णं ज्ञात्वा चारयितुं गतम् १३
तैर्दुर्निमित्तैर्निधनं मत्वा प्राप्तमतद्विदः तत्प्राणास्तन्मनस्कास्ते दुःखशोकभयातुराः १४ आबालवृद्धवनिताः सर्वे ऽंग पशुवृत्तयः निर्जग्मुर्गोकुलाद्दीनाः कृ-
ष्णदर्शनलालसाः १५ तांस्तथा कातरान्वीक्ष्य भगवान्माधवो बलः प्रहस्य किंचिन्नोवाच प्रभावज्ञोऽनुजस्य सः १६ तेऽन्वेषमाणा दयितं कृष्णं सूचि-
तया पदैः भगवल्लक्षणैर्जग्मुः पदव्या यमुनातटम् १७ ते तत्र तत्राब्जयवांकुशाशनिध्वजोपपन्नानि पदानि विश्पतेः मार्गे गवामन्यपदांतरांतरे
निरीक्षमाणा ययुरंग सत्वराः १८ अंतर्ह्रदे भुजगभोगपरीतमारात्कृष्णं निरीहमुपलभ्य जलाशयांते गोपांश्च मूढधिषणान् परितः पशूंश्च संक्रं-
दतः परमकश्मलमापुरार्ताः १९

तः स्वसदनाभिभवं निरीक्ष्य तदसहमानः सर्पः समसरत् समाजगाम ८ प्रेक्षणीयश्च सुकुमारश्च घनवदुज्ज्वलश्च तं श्रीव-
त्सपीतवसनं श्रीवत्सेन संयुक्तं सुचलत्पीतं वस्त्रं यस्य तम् भुजया भोगेन चच्छाद अवेष्टयत् ९ स प्रियो येषां ते तत्प्रियाः ते च ते सखायश्च इति १० ११ भुवि भूकंपादयः दि-
वि उल्कापातादयः आत्मनि वामनेत्रस्फुरणादयः आसन्नभयं शंसितुं शीलं येषां ते १२ तानालक्ष्य गोकुलान्निर्जग्मुरिति तृतीयेनान्वयः भयोद्विग्नाः भयहेतुभ्यो भीताः भये
न कंपमाना इति वा १३ न तं विदंतीति अतद्विदः १४ पशुवृत्तयः अतिवत्सलाः १५ कातरान् भीतान् १६ भगवंतं लक्षयंतीति यानि पदानि तैः पदैः सूचितया पदव्या मार्गेण
१७ पदैर्मार्गज्ञानप्रकारमाह तइति विश्पतेः श्रीकृष्णस्य अन्येषां पदानामंतरांतरे मध्ये मध्ये तत्तदपोहेन गवां श्रुतीनां मार्गे सत्वराः अप्रमत्ताः योगिनस्तदुपाध्यपवादेन य-
था परतत्त्वं मृगयंते तद्वदिति भावः १८ ततश्च सर्पशरीरवेष्टितकृष्णं दूरान्निरीक्ष्य गोपांश्च पशूंश्च तथा निरीक्ष्यार्ताः परमकश्मलं परं मोहं प्रापुः १९ ध ध

प्रियेणश्रीकृष्णेनव्यतिरहितंविरहितंत्रैलोक्यंशून्यंददृशुः २० २१ २२ अनन्यगतिमात्मानमित्थंनिरीक्ष्यातएवात्महेतोः स्वगोकुलमतिदुःखितमाज्ञायउरगबंधादुदतिष्ठदि
त्यन्वयः २३ तस्यप्रथ्यमानेनवपुषाव्यथितात्मशरीरोभुजंगः कुंडलीमुन्मुच्यतंत्यक्त्वाकुपितः फणामुन्नमय्यश्वसन् केवलमीक्षमाणस्तस्थौ कथंभूतः श्वसनरंध्रेषुनासाविवरे
षुविषंयस्यसतथा अंबरीषोभंडकपाकभाजनंतद्वत्संतप्तानिस्तब्धानिईक्षणानियस्यसतथा उल्मुकानिमुखेषुयस्यसचसच २४ हरिश्चक्रीडंस्तमनुसर्पपरिससार परितोब-
भ्राम अतिकरालाविषाग्निमुक्ताहार्ष्टियस्यतं जिह्वयाद्विशिखयेतिप्रतिमुखं २५ एवंपरिभ्रमेणोपहृतमोजोयस्यतम् तस्यमूर्द्धस्थैरत्ननिकरास्तेषांस्पर्शेनाताम्रंरूपंयत्पादांबु
जंयस्यसः ननुकथंचंचलेषुशिरस्सुननर्ततत्राह अखिलकलानामादिगुरुः २६ उपसेदुःप्राप्ताः २७ शतैकशीर्ष्णः शतमेकानिमुख्यानिशीर्षाणियस्यतस्य क्षीणासुर्बोऽपिपु

गोप्योऽनुरक्तमनसोभगवत्यनंतेतत्सौहृदस्मितविलोकगिरःस्मरंत्यः ग्रस्तेऽहिनाप्रियतमेभृशदुःखतप्ताः शून्यंप्रियव्यतिहृतंददृशुस्त्रिलोकम् २०
ताः कृष्णमातरमपत्यमनुप्रविष्टांतुल्यव्यथाः समनुगृह्य शुचः स्रवंत्यः तास्ताःप्रियव्रजकथाःकथयंत्यआसन्कृष्णाननेऽर्पितदृशोमृतकप्रतीताः २१ कृ
ष्णप्राणान्निर्विशतोनंदादीन्वीक्ष्यतंह्रदम् प्रत्यषेधत्सभगवान्रामः कृष्णानुभाववित् २२ इत्थंस्वगोकुलमनन्यगतिंनिरीक्ष्यसस्त्रीकुमारमतिदुःखि
तमात्महेतोः आज्ञायमर्त्यपदवीमनुवर्तमानःस्थित्वामुहूर्तमुदतिष्ठदुरगबंधात् २३ तत्प्रथ्यमानवपुषाव्यथितात्मभोगस्त्यक्त्वोन्नमय्यकुपितःस्वफ
णान्भुजंगः तस्थौश्वसञ्छ्वसनरंध्रविषांबरीषस्तब्धेक्षणोल्मुकमुखोहरिमीक्षमाणः २४ तंजिह्वयाद्विशिखयापरिलेलिहानंद्वेसृक्किणीह्यतिकराल
विषाग्निदृष्टिम् क्रीडन्नमुंपरिससारयथाखगेंद्रोबभ्रामसोऽप्यवसरंप्रसमीक्षमाणः २५ एवंपरिभ्रमहतौजसमुन्नतांसमानम्यतत्पृथुशिरस्स्वधिरू
ढआद्यः तन्मूर्द्धरत्ननिकरस्पर्शातिताम्रपादांबुजोऽखिलकलादिगुरुर्ननर्त २६ तंनर्तुमुद्यतमवेक्ष्यतदातदीयगंधर्वसिद्धसुरचारणदेववध्वः प्री
त्यामृदंगपणवानकवाद्यगीतपुष्पोपहारनुतिभिःसहसोपसेदुः २७ यद्यच्छिरोननमतेऽगशतैकशीर्ष्णस्तत्तन्ममर्दखलदंडधरोऽङ्घ्रिपातैः क्षीणा
युषोभ्रमतउल्बणमास्यतोऽसृङ्नस्तोवमन्परमकश्मलमापनागः २८ तस्याक्षिभिर्गरलमुद्वमतःशिरस्सुयद्यत्समुन्नमतिनिःश्वसतोरुषोच्चैः
नृत्यन्पदानुनमयन्दमयांबभूवपुष्पैःप्रपूजितइवेहपुमान्पुराणः २९ तच्चित्रतांडवविरुग्णफणातपत्रोरक्तंमुखैरुरुवमन्नृपभग्नगात्रः स्मृ
त्वाचराचरगुरुंपुरुषंपुराणंनारायणंतमरणंमनसाजगाम ३० कृष्णस्यगर्भजगतोऽतिभरावसन्नपार्ष्णिप्रहारपरिरुग्णफणातपत्रम् दृष्ट्वा
हिमाद्यमुपसेदुरमुष्यपत्न्य आर्ताःश्लथद्वसनभूषणकेशबंधाः ३१ तास्तंसुविग्नमनसोऽथपुरस्कृतार्भाःकायान्निधायभुविभूतपतिंप्रणेमुः सा
ध्व्यःकृतांजलिपुटाःशमलस्यभर्तुर्मोक्षेप्सवःशरणदंशरणंप्रपन्नाः ३२

नम्रमतः यद्यच्छिरोननमतेस्तब्धतानजहाति नृत्यच्छलेनांघ्रिपातैस्तत्तन्ममर्दतदाचा
स्यतोमुखेभ्योनस्तोनासाविवरेभ्यश्चासृग्वमन् २८ पुनरपिरुषाउच्चैर्निःश्वसतायत्समुन्नमतितत्तत्पदाघातेनानुनमयन् इहअस्मिन्नवसरेहृष्टैर्गंधर्वादिभिः शेषासनःपुराणपुरुषइव
यशोदानंदनःपुष्पैःप्रपूजितः यद्वा तदागंधर्वादिभिः पुष्पैःप्रपूजितोगोपैःपुराणःपुमानिव दृष्टइति यद्वा पुष्पैःप्रपूजितइवप्रसन्नःसन्दमयांबभूवाहितंकृतवानित्यर्थः २९ अरणंशरणं ३०
गर्भेजगंतियस्यतस्यातिभारेणावसन्नमाक्रांतं पार्ष्णिःपादपृष्ठं आद्यंश्रीकृष्णं श्लथंतोविस्रंसमानावसनादयो-यासांताः ३१ ताःशरणंप्रपन्नाःसत्यः तंप्रणेमुःसुविग्नमनसः अतिवि
ह्वलचित्ताः भुवीतितस्मिन्स्थाने जलाधस्ताद्वातीरेवा शमलस्यपापात्मनोऽपिभर्तुर्मोक्षेप्सवः भर्तुःयत् शमलंतस्यवा भूतपतिंप्राणिमात्रस्यपातिम् शरणदमाश्रयप्रदम् ३२

प्रथमं तावत्कुपितं भगवंतं दंडानुमोदनेनोपशमयंत्यः स्तुवंति न्याय्योहीति तत्र दंडानुमोदनं षड्भिर्दशभिश्चहरेः स्तुतिः प्रार्थनं पंचभिः श्लोकैस्ततः पन्नगयोषिताम् नचनिग्रहानु
ग्रहलक्षणं वैषम्यं तवास्तीत्याहुः धत्सेदममिति अनुशंसन् आलोचयन् ३३ निग्रहोप्यनुग्रहायेत्युक्तम् इदानीमनुग्रह एवायंननिग्रह इत्याहुः अनुग्रहइति नः अस्माकं यस्माद
मुष्यसर्पत्वं दृश्यते अतस्तन्मूलपापनिवर्तकोदंडो नुग्रह एवक्रोधत्वेनप्रतीयमानोऽपीत्यर्थः ३४ महांश्चायमनुग्रह इतितस्यपूर्वपुण्यमभिनंदंति तपइति स्वयंमानरहितेन अन्ये
ष्योमानदेनच सर्वजीवयतीतिसर्वजीवः ३५ नतपआदिनिमित्त एष भाग्योदयः किंतु आचिंत्यं तवकृपावैभवमित्याहुः श्लोकत्रयेण कस्यानुभावइति तपआदिनाब्रह्मादयोऽपियस्याः
श्रियः प्रसादमिच्छंति साश्रीर्ललना उत्तमास्त्री यस्यत्वदंघ्रिस्पर्शाधिकारस्यवांछयातप आचरत् अस्यसर्पस्यसकिंकृतवानितिकोवेत्तीत्यर्थः ३६ यत्तवपादरजः प्रपन्नाः प्राप्ताः पारमे
श्व्याद्यपितुच्छंमन्यंते ३७ अहोतदेव अयत्नत एव प्राप अन्यैः श्र्यादिभिरपिकथंभूतंपादरजः यदिच्छतः सेव्यंमेभवत्विति प्रार्थयमानस्येवसमक्षः प्रत्यक्ष एवविभवः अपेक्षितासं
पद्भवति ३८ नमस्कुर्म्यं भगवते आचिंत्यैश्वर्यादिगुणाय तदुपपादनाय दशभिः श्लोकैर्विशेषणानि पुरुषायपूर्षु अंतर्यामिरूपेणवर्तमानाय महात्मने एवमपिनाति परिछिन्नाय

नागपत्न्यऊचुः न्याय्योहिदंडः कृतकिल्बिषेऽस्मिंस्तवावतारः खलनिग्रहाय रिपोः सुतानामपितुल्यदृष्टेर्धत्सेदमं फलमेवानुशंसन् ३३ अनु
ग्रहोयं भवताकृतोहिनो दंडोसतां तेखलुकल्मषापहः यद्दंदशूकत्वममुष्यदेहिनः क्रोधोऽपितेऽनुग्रह एवसंमतः ३४ तपः सुतप्तंकिमनेनपूर्वंनिरस्त
मानेनचमानदेन धर्मोथवासर्वजनानुकंपया यतोभवांस्तुष्यति सर्वजीवः ३५ कस्यानुभावोऽस्यनदेवविद्महेतवांघ्रिरेणुस्पर्शाधिकारः यद्वां
छयाश्रीर्ललनाचरत्तपोविहायकामान्सुचिरंधृतव्रता ३६ ननाकपृष्ठंनचसार्वभौमंनपारमेष्ठ्यंनरसाधिपत्यम् नयोगसिद्धीरपुनर्भवंवावांछ
तियत्पादरजः प्रपन्नाः ३७ तदेषनाथापदुरापमन्यैस्तमोजनिः क्रोधवशोऽप्यहीशः संसारचक्रे भ्रमतः शरीरिणोयदिच्छतः स्याद्विभवः समक्षः
३८ नमस्तुभ्यंभगवते पुरुषायमहात्मने भूतावासायभूतायपरायपरमात्मने ३९ ज्ञानविज्ञाननिधये ब्रह्मणेनंतशक्तये अगुणायाविका
रायनमस्तेप्राकृतायच ४० कालायकालनाभायकालावयवसाक्षिणे विश्वायतदुपद्रष्ट्रेतत्कर्त्रेविश्वहेतवे ४१ भूतमात्रेंद्रियप्राणमनोबुध्याश
यात्मने त्रिगुणेनाभिमानेनगूढस्वात्मानुभूतये ४२

कुतः भूतावासाय आकाशाद्याश्रयाय एतदपिकुतः भूतायपूर्वमपिसते कुतः परायकारणाय किंच परमात्म
नेकारणातीताय ३९ कारणत्वंकारणातीतत्वंच समर्थयितुमाहुः ज्ञानविज्ञाननिधये ज्ञानंज्ञप्तिः विज्ञानं चिच्छक्तिः उभयोः निधये ताभ्यांपूर्णाय कथंतयात्वमतउक्तम् ब्रह्मणे
नंतशक्तये कथंभूतायब्रह्मणे अगुणाय अविकाराय कथंभूताय अनंतशक्तये प्राकृताय प्रकृतिप्रवर्तकाय अप्राकृतायइतिवा अप्राकृतायानंतशक्तियुक्ताय अयमर्थः अगु
णत्वादविकारं ब्रह्मज्ञप्तिमात्रत्वात् कारणातीतं प्रकृतिप्रवर्तकोऽनंतशक्तिर्विज्ञाननिधित्वादीश्वरः कारणम् तदुभयात्मनेनमइति ४० अनंतशक्तित्वात् कालशक्त्याविश्व
स्रष्टृत्वादिरूपेणानमस्यंति कालायकालस्वरूपाय कालनाभाय कालशक्त्याश्रयाय काष्ठावयवानांसृष्ट्यादिसमयानांसाक्षिणे ततश्चविश्वायविश्वरूपाय तर्हिकिंजडोऽहं
नहि तदुपद्रष्ट्रे नचद्रष्टृमात्राय किंतु तत्कर्त्रे नचकर्तृमात्राय विश्वहेतवे सर्वकारकरूपाय ४१ तदेवाहुः भूतमात्रेंद्रियप्राणमनोबुध्याशयात्मने आशयश्चित्तम् भूतादिरू
पाय अतः सर्वकारकरूपायेति अहंकारात्मतयानमस्यंति त्रिगुणेनेति एवंसृष्टकार्येयस्त्रिगुणोऽभिमानस्तेनगूढास्वांशभूतानामात्मनांजीवानामनुभूतिर्येनतस्मै ४२

त्वंत्वहंकारानावृतइतिस्तुवंति नमोनंतायाहंकारापरिच्छेदात् अतः सूक्ष्मायादृश्यत्वात् अतएवकूटस्थायउपाधिकृतविकाराभावात् अतएवविपश्चितेसर्वज्ञाय एवंवस्तुतः स्तुत्वाऽचिं त्यमायात्वेनस्तुवंति नानावादानुरोधाय अस्तिनास्तिसर्वज्ञः किंचिज्ज्ञः बद्धः मुक्तएकः अनेकइत्यादिनानावादाननुरुणद्धि मायया अनुवर्ततेयस्तस्मै किंच वाच्यवाचकशक्तये अभि धानाभिधेयशक्तिभेदादपिनानात्वेनप्रतीयमानायेत्यर्थः ४३ अनावृतत्वमेवहेत्वंतरेणापिसूचयंतस्तस्तुवंति नमः प्रमाणमूलायचक्षुरादीनांचक्षुरादिरूपाय अतएव कवयेस्वयंतान्नि रपेक्षज्ञानाय कुतः शास्त्रयोनयेवेदात्मकनिःश्वासाय किंच प्रवृत्तायनिवृत्तायनिगमायनमोनमः ४४ किंच अनावृतैश्वर्यत्वादेवचतुर्मूर्तिरूपेणसर्वोपास्यत्वेननमंति नमः कृष्णायेति स्त्राकेन रामाय संकर्षणाय वसुदेवसुतायच वसुदेवशब्दितं शुद्धंसत्वंतत्रप्रकाशमानायवासुदेवायेत्यर्थः सात्वतामुपासकानांपतयेसालोक्यादिनापालकाय एवंचतुर्मूर्तयेकृष्णा यतुभ्यंनमइति ४५ कथंचतुर्मूर्तिरितितदाहुः नमोगुणप्रदीपायेति गुणाः अंतःकरणानितानिप्रदीपयति —— प्रकाशयतीतितथा तस्मैचित्ताद्यधिष्ठातृत्वेनचतुर्मूर्तिरित्यर्थः नपुन स्ताऽपिएकस्यैवकथंचतुष्ट्वमतआहुः गुणात्मच्छादनाय तैरेवगुणैरुपासकानांफलवैचित्र्यायात्मानमाच्छादनानात्वेनप्रकाशमानायेत्यर्थः ननुतर्हिकथंप्रतीतिरतउक्तं गुणवृत्त्युपल क्ष्यायचित्तादीनांचेतनाध्यवसायादिवृत्तिभिरुपलक्ष्याय उपलक्षणमेवाहुः गुणद्रष्ट्रेतत्साक्षिणेकथंचिदुपलक्ष्यएव नज्ञेयइत्याहुः स्वसंविदेअगोचरायेत्यर्थः ४६ अगोचरत्वमुपल-

नमोनंताय सूक्ष्मायकूटस्थायविपश्चिते नानावादानुरोधायवाच्यवाचकशक्तये ४३ नमः प्रमाणमूलायकवयेशास्त्रयोनये प्रवृत्तायनिवृत्तायनि गमायनमोनमः ४४ नमः कृष्णायरामायवसुदेवसुतायच प्रद्युम्नायानिरुद्धायसात्वतांपतयेनमः ४५ नमोगुणप्रदीपायगुणात्मच्छादनायच गु णवृत्त्युपलक्ष्यायगुणद्रष्ट्रेस्वसंविदे ४६ अव्याकृतविहारायसर्वव्याकृतसिद्धये हृषीकेशनमस्तेस्तुमुनयेमौनशीलिने ४७ परावरगतिज्ञायसर्वा- ध्यक्षायतेनमः अविश्वायचविश्वायतद्द्रष्ट्रेऽस्यचहेतवे ४८ त्वंह्यस्यजन्मस्थितिसंयमान्प्रभोगुणैरनीहोऽकृतकालशक्तिधृक् तत्तत्स्वभावान्प्रति बोधयन्सतः समीक्षयाऽमोघविहारईहसे ४९ तस्यैवतेऽमूस्तनवस्त्रिलोक्यांशांताअशांताउतमूढयोनयः शांताः प्रियास्तेह्यधुनाऽवितुंसतांस्थातु श्चतेधर्मपरीप्सयेहतः ५० अनुगृह्णीष्वभगवन्प्राणांस्त्यजतिपन्नगः स्त्रीणांनः साधुशोच्यानांपतिः प्राणः प्रदीयतां ५१

क्ष्यत्वंचदर्शयंत्योनमंति अव्याकृतविहाराय अतर्क्यमहिम्नइत्यर्थः सर्वव्याकृतसिद्धयेसर्वकार्योत्पत्तिप्रकाशहेतुत्वेनोपलक्षणयोग्यायेत्यर्थः उपलक्षणांतरमाहुः हेहृषीकेशकरणप्रवर्तककिंविषयलिप्सयानमुनयेआत्मारामाय किं साधनवशेनवा नहिमौनशीलिनेमौनमात्मारामतातत्स्वभावाय ४७ कुतः परावरगतिज्ञाय स्थूलसूक्ष्माणांगतिज्ञत्वेननक्वापिसज्जमानायेत्यर्थः अपिचसर्वाध्यक्षायसर्वस्याधिष्ठात्रेकुत पतत् अविश्वायनविश्वंयस्मिन्तन्निषेधावधये विश्वायचतद्विवर्ताधिष्ठानायेत्यर्थः किंच तद्द्रष्ट्रेअध्यासापवादसाक्षिणे अपिचअस्यविश्वाध्यासस्यतदपवादस्यविद्याविद्याभ्यांहेतवे यद्वा अविश्वायविश्वतैजसाद्यवस्थारहिताय विश्वायच माययास्वांशैस्तत्तदवस्थाय तद्द्रष्ट्रे तासामवस्थानांभावाभावसाक्षिणे अं[illegible]समानं तस्मात्सर्वगतिज्ञत्वसर्वाधिष्ठातृत्वात्मा रामत्वादिभिर्निरतिशयैश्वर्यायतुभ्यंनमइति विशेषणैरसंकीर्णैः पंचपचाशतास्तुतः अहिस्त्रीभिः प्रसन्नोवस्तासामिव भवेद्धरिः ४८ एवंतावद्दंडानुमोदनेननमस्कारैश्चभगवंतंप्र- साद्यइदानींत्वदधीनानांप्राणिनांकोपराधइत्याशयवत्यः प्रार्थयंते त्वंहीति अस्यलोकस्यजन्मादित्वमेवअकृत अकरोः ततश्चतांस्तान्संस्काररूपेणसतः स्वभावान्घोरत्वादीन्प्रतिबोध यन्नीहसेक्रीडसि यद्वा अस्यजन्मादींस्त्वमीहसइत्यन्वयः कथंभूतः अकृता अनादिर्याकालशक्तिस्तांधारयतीतितया अन्यत्समानम् ४९ अतस्तस्यतवैवामूस्तनवस्तन्यंतइतितनवः क्री डोपस्कराः तथाऽपितवाधुनाशांताः प्रियाः कुतः सतांधर्मपरिपालनेच्छयाईहतः प्रवर्तमानस्यातस्तानवितुंस्थातुः स्थितस्य ५० ५१

७ ७ ७

एवंतवाप्रियाचरणाद्यपराधस्तर्हिसोढव्यइति ५२ युष्मदनुग्रहे ऽन्येषांमृत्करेवेतिचेत्तन्नेत्याहुः विधेहीति त्वदाज्ञयाप्राणिनोनाप्नोमोतिभावः ५३ ५४ ५५ यदसद्ग्रहइति य
तः स्वभावोसद्ग्रहरूपः यद्वायतः स्वभावादसतिदेहादौयोग्रहः सदुस्त्यजइति ५६ गुणैर्विविधतयाऽसृज्यत इतिगुणविसर्जनं तत्रापिनानास्वभावादयोयस्यतत् ५७ जात्याजन्मनैवउ
रुमन्युर्येषांतेवयंकथंत्यजामः ५८ हियस्मात्तत्रतन्मायात्यागेभवानेवकारणमिति अनुग्रहंविधेहि ममाज्ञयारक्षांदतीतिईश्वरत्वान्निग्रहंवाविधेहीति ५९ ६० यतोगोभिर्नृभिश्चनदीभुज्य
तामिति ६१ नयुष्मत्तोभयमाप्नुयात् तस्मयुष्माभिर्भयंनोत्पादनीयमित्याज्ञा इतोपिलयानिर्गंतव्यमित्याह योऽस्मानितित्वयिस्थितेतन्नसंभवतीतिभावः ६२ नचतवगरुडभयमर्वे

अपराधः सकृद्भर्त्रासोढव्यः स्वप्रजाकृतः क्षंतुमर्हसिशांतात्मन्मूढस्यत्वामजानतः ५२ विधेहितेकिंकरीणामनुष्ठेयंतवाज्ञया यच्छ्रद्धयाऽनुति
ष्ठन्वैमुच्यतेसर्वतोभयात् ५३ श्रीशुकउवाच इत्थंसनागपत्नीभिर्भगवान्समभिष्टुतः मूर्च्छितंभग्नशिरसंविससर्जांघ्रिकुट्टनैः ५४ प्र
तिलब्धेंद्रियप्राणः कालियः शनकैर्हरिम् कृच्छ्रात्समुच्छ्वसन्दीनः कृष्णंप्राहकृतांजलिः ५५ वयंखलाःसहोत्पत्त्यातामसादीर्घमन्यवः स्वभावो
दुस्त्यजोनाथलोकानांयदसद्ग्रहः ५६ त्वयासृष्टमिदंविश्वंधातर्गुणविसर्जनम् नानास्वभाववीर्यौजोयोनिबीजाशयाकृति ५७ वयंचतत्रभगव
न्सर्पाजात्युरुमन्यवः कथंत्यजामस्त्वन्मायांदुस्त्यजांमोहिताःस्वयम् ५८ भवान्हिकारणंतत्रसर्वज्ञोजगदीश्वरः अनुग्रहंनिग्रहंवामन्यसेतद्वि
धेहिनः ५९ श्रीशुकउवाच इत्याकर्ण्यवचःप्राहभगवान्कार्यमानुषः नात्रस्थेयंत्वयासर्पसमुद्रंयाहिमाचिरम् ६० स्वज्ञात्यपत्यदाराढ्योगोनृ
भिर्भुज्यतांनदी यएतत्संस्मरेन्मर्त्यस्तुभ्यंमदनुशासनम् ६१ कीर्तयन्नुभयोःसंध्योर्नयुष्मद्भयमाप्नुयात् योऽस्मिन्स्नात्वामदाक्रीडेदेवादींस्तर्पयेज्जलैः
६२ उपोष्यमांस्मरन्नर्चेत्सर्वपापैःप्रमुच्यते द्वीपंरमणकंहित्वाह्रदमेतमुपाश्रितः यद्भयात्ससुपर्णस्त्वांनाद्यान्मत्पादलांछितम् ६३ ऋषिरुवाच
एवमुक्तोभगवताकृष्णेनाद्भुतकर्मणा तंपूजयामाससमुदानागपत्न्यश्चसादरम् ६४ दिव्यांबरस्रग्मणिभिः परार्ध्यैरपिभूषणैः दिव्यगंधानुलेपै
श्चमहत्योत्पलमालया ६५ पूजयित्वाजगन्नाथंप्रसाद्यगरुडध्वजम् ततःप्रीतोभ्यनुज्ञातःपरिक्रम्याभिवाद्यतम् ६६ सकलत्रसुहृत्पुत्रोद्वीपमब्धे
र्जगामह तदैवसामृतजलायमुनानिर्विषाभवत् अनुग्रहाद्भगवतःक्रीडामानुषरूपिणः ६७ इतिश्रीभा॰ कालियनिर्यापणंनामषोडशोऽध्यायः
१६ राजोवाच नागालयंरमणकंकस्मात्तत्याजकालियः कृतंकिंवासुपर्णस्यतेनैकेनासमंजसम् १ श्रीशुकउवाच उपहार्यैःसर्पज
नैर्मासिमासीहयोबलिः वानस्पत्योमहाबाहोनागानांप्राक्निरूपितः २ स्वंस्वंभागंप्रयच्छंतिनागाःपर्वणिपर्वणि गोपीथायात्मनःसर्वेसुपर्णा
यमहात्मने ३ विषवीर्यमदाविष्टःकाद्रवेयस्तुकालियः कदर्थीकृत्यगरुडंस्वयंतंबुभुजेबलिम् ४

दित्याह द्वीपमिति ६३ ६४ ६५ ६६ ६७ इ
तिश्रीभागवतेदशमस्कंधेटीकायांषोडशोऽध्यायः १६ नागंसदशेनागालयंतंनिरयापयत् बंधून्स्वदुःखतःश्रांतान्कृतांस्तत्रदवादपात् १ असमंजसमप्रियम् १ उ
पहार्यैः प्रस्येःसर्पजनैः सर्पायत्तैर्जनैः वानस्पत्यः वनस्पतेर्मूलेदेयः नागानांतद्बाधापरिहाराययोबलिर्निरूपितःउपकल्पितः २ तेचनागाःस्वंस्वंभागंजनैर्दत्तंसुपर्णायप्रयच्छंति
ततोभीताःगोपीथायरक्षणाय ३ विषवीर्याभ्यांयोमदः तेनाविष्टःकाद्रवेयः कद्रुपुत्रोगरुडंकदर्थीकृत्य अविगणय्ययद्वाउपहार्यैःसुपर्णभक्ष्यैःसर्पाएवजनास्तैर्नागानांसंबंधीयस्मिन्ने
कैकोनागोदीयते तथाभूतोयोबलिः सुपर्णायनिरूपितः तत्रस्वंस्वंभागंसर्वेनागाःप्रयच्छंति कालियस्तुनप्रयच्छति किंत्वन्यैर्दत्तमपितंबलिंस्वयमेवबुभुजे ४ ५ ६

५ विषमेवायुधं यस्य सः प्रत्यभ्ययात् योद्धुं प्रतिजगाम उच्छ्रितनैकमस्तकः उन्नामितानेकफणः ददायुधः दंतायुधः करालजिह्वश्चासावुच्छ्वसितोग्रलोचनश्च उच्छ्वसितानि उज्जृंभितानि उग्राणि लोचनानि यस्य सः ६ तार्क्ष्यपुत्रो गरुडः मधुसूदनस्यासनं यस्मिन्सः ७ तस्य गरुडस्य अगम्यम् अगाधतया दुरासदं ८ तदगम्यत्वे कारणमाह तत्रेति निवारितोऽपि ९ १० ११ लेलिहः सर्पः अतस्तत्रावात्सीत् १२ जांबूनदस्वर्णं तेनालंकृतम् १३ असवः इंद्रियाणि प्रमोदनिभृतात्मानः आनंदपूर्णमनसः १४ लब्धेहाः लब्धचेष्टाः १५ नगाः

तच्छ्रुत्वा कुपितो राजन्भगवान्भगवत्प्रियः विजिघांसुर्महावेगः कालियं समुपाद्रवत् ५ तमापतंतं तरसा विषायुधः प्रत्यभ्ययादुच्छ्रितनैकमस्तकः दद्भिः सुपर्णं व्यदशद्ददायुधः करालजिह्वोच्छ्वसितोग्रलोचनः ६ तं तार्क्ष्यपुत्रः स निरस्य मन्युमान्प्रचंडवेगो मधुसूदनासनः पक्षेण सव्येन हिरण्यरोचिषा जघान कद्रूसुतमुग्रविक्रमः ७ सुपर्णपक्षाभिहतः कालियोऽतीव विह्वलः ह्रदं विवेश कालिंद्यास्तदगम्यं दुरासदम् ८ तत्रैकदा जलचरं गरुडो भक्ष्यमीप्सितम् निवारितः सौभरिणा प्रसह्य क्षुधितोऽहरत् ९ मीनान्सुदुःखितान्दृष्ट्वा दीनान्मीनपतौ हते कृपया सौभरिः प्राह तत्रत्यक्षेममाचरन् १० अत्र प्रविश्य गरुडो यदि मत्स्यान्स खादति सद्यः प्राणैर्वियुज्येत सत्यमेतद्ब्रवीम्यहम् ११ तं कालियः परं वेद नान्यः कश्चन लेलिहः अवात्सीद्गरुडाद्भीतः कृष्णेन च विवासितः १२ कृष्णं ह्रदाद्विनिष्क्रांतं दिव्यस्रग्गंधवाससम् महामणिगणाकीर्णं जांबूनदपरिष्कृतम् १३ उपलभ्योत्थिताः सर्वे लब्धप्राणा इवासवः प्रमोदनिभृतात्मानो गोपाः प्रीत्याऽभिरेभिरे १४ यशोदा रोहिणी नंदो गोप्यो गोपाश्च कौरव कृष्णं समेत्य लब्धेहा आसन्लब्धमनोरथाः १५ रामश्चाच्युतमालिंग्य जहासास्यानुभाववित् नगा गावो वृषा वत्सा लेभिरे परमां मुदम् १६ नंदं विप्राः समागत्य गुरवः सकलत्रकाः ऊचुस्ते कालियग्रस्तो दिष्ट्या मुक्तस्तवात्मजः १७ देहि दानं द्विजातीनां कृष्णनिर्मुक्तिहेतवे नंदः प्रीतमना राजन्गाः सुवर्णं तदादिशत् १८ यशोदापि महाभागा नष्टलब्धप्रजा सती परिष्वज्यांकमारोप्य मुमोचाश्रुकलां मुहुः १९ तां रात्रिं तत्र राजेंद्र क्षुत्तृड्भ्यां श्रमकर्शिताः ऊषुर्व्रजौकसो गावः कालिंद्या उपकूलतः २० तदा शुचिवनोद्भूतो दवाग्निः सर्वतो व्रजम् सुप्तं निशीथ आवृत्य प्रदग्धुमुपचक्रमे २१ तत उत्थाय संभ्रांता दह्यमाना व्रजौकसः कृष्णं ययुस्ते शरणं मायामनुजमीश्वरं २२ कृष्ण कृष्ण महाभाग हे रामामितविक्रम एष घोरतमो वह्निस्तावकान्ग्रसते हि नः २३ सुदुस्तरान्नः स्वान्पाहि कालाग्नेः सुहृदः प्रभो न शक्नुमस्त्वच्चरणं संत्यक्तुमकुतोभयम् २४ इत्थं स्वजनवैक्लव्यं निरीक्ष्य जगदीश्वरः तमग्निमपिबत्तीव्रमनंतोऽनंतशक्तिधृक् २५ इति श्रीभागवते महापुराणे दशमस्कंधे कालियदमनो नाम सप्तदशोऽध्यायः १७ श्रीशुक उवाच अथ कृष्णः परिवृतो ज्ञातिभिर्मुदितात्मभिः अनुगीयमानो न्यविशद्व्रजं गोकुलमंडितम् १

वृक्षा अपि पूर्वं शुष्काः संतः सद्य एव विरूढा इत्यर्थः १६ ते विप्रा ऊचुः १७ १८ नष्टलब्धप्रजा नष्टप्राया पुनर्लब्धा प्रजा यया सा १९ श्रमेण च कर्शिताः उपकूलतः कूलप्रांते २० २१ २२ २३ कालाग्नेः मृत्युरूपादग्नेः न मृत्योर्बिभीमः किंतु त्वच्चरणवियोगादित्याहुः न शक्नुम इति २४ २५ विमोहनाद्विदंडेन ततः स्वं शरणागतान् गोपानपाद नंतोऽसावनंतवनवह्नितः १ इति श्रीभागवते दशमस्कंधे टीकायां सप्तदशोऽध्यायः १७
अष्टादशे तु तत्रैव वसंतगुणलक्षिते अघातयद्बलेनालं प्रलंबं लीलया हरिः १ कृतानृत्यं फणाग्रेषु कालियस्य सकौतुकम् बलं प्रलंबतुंगांसमारोहयदरातिहा २ १

गोपालच्छद्ममायया गोपालनमेव छद्मयस्यांतयामायया २ ३ वसंतसाम्यमाह चतुर्भिः यत्रग्रीष्मेपिनिर्झराणांनिर्ह्रादेनघोषेणानिवृत्तस्वनाः छन्नध्वनयोझिल्लिकाः कठोरध्वनि सूक्ष्मकीटायस्मिन् तथाभूतंवृंदावनंभवतिकिंच शश्वत्तेषांनिर्झराणांशीकरैरंबुकणैर्ऋजीषाः स्निग्धायेद्रुमास्तेषांमंडलेमंडितं ४ यत्रग्रीष्मेवनेचानिदाघोग्रीष्मस्तेनततक्लीनवन्यौकोभ्यांचभवतियोदवस्तापः अतिशाद्वलेअतिहरिततृणाकीर्णे यद्वा अतिक्रांतशाद्वलेपिस्थाने ५ ननुशाद्वलमेवकुतस्त्यंतत्राह अगाधेति अगाधानितोयानियासांतासांह्रदिनीनांतटस्पर्शिभिरूर्मिभिः पुलिनैःसहद्रववत्पुरीषपंकोयस्यास्तस्याभुवः रसंशाद्वलितंशाद्वलरूपतांचविषवदुल्बणाअपिसूर्यरश्मयोनगृण्हते नहरंति ६ तद्वनमावि

व्रजेविक्रीडितोरेवंगोपालच्छद्ममायया ग्रीष्मोनामर्तुरभवन्नातिप्रेयान्शरीरिणाम् २ सचवृंदावनगुणैर्वसंतइवलक्षितः यत्रास्तेभगवान्साक्षाद्रामेणसहकेशवः ३ यत्रनिर्झरनिर्ह्रादनिवृत्तस्वनझिल्लिकम् शश्वत्तच्छीकरर्जीषद्रुममंडलमंडितम् ४ सरित्सरःप्रस्रवणोर्मिवायुनाकल्हारकंजोत्पलरेणुहारिणा नविद्यतेयत्रवनौकसांदवोनिदाघवन्ह्यर्कभवोतिशाद्वले ५ अगाधतोयह्रदिनीतटोर्मिभिर्द्रवत्पुरीष्याःपुलिनैःसमंततः नयत्रचंडांशुकराविषोल्बणाभुवोरसंशाद्वलितंचगृण्हते ६ वनंकुसुमितंश्रीमन्नदच्चित्रमृगद्विजम् गायन्मयूरभ्रमरंकूजत्कोकिलसारसम् ७ क्रीडिष्यमाणस्तत्कृष्णोभगवान्बलसंयुतः वेणुंविरणयन्गोपैर्गोधनैःसंवृतोविशत् ८ प्रवालबर्हस्तबकस्रग्धातुकृतभूषणाः रामकृष्णादयोगोपाननृतुर्युयुधुर्जगुः ९ कृष्णस्यनृत्यतःकेचिज्जगुःकेचिदवादयन् वेणुपाणितलैःशृंगैःप्रशशंसुरथापरे १० गोपजातिप्रतिच्छन्नादेवागोपालरूपिणः ईडिरेकृष्णरामौचनटाइवनटंनृप ११ भ्रामणैर्लंघनैःक्षेपैरास्फोटनविकर्षणैः चिक्रीडतुर्नियुद्धेनकाकपक्षधरौक्वचित् १२ क्वचिन्नृत्यत्सुचान्येषुगायकौवादकौस्वयम् शशंसतुर्महाराजसाधुसाध्वितिवादिनौ १३ क्वचिद्बिल्वैःक्वचित्कुंभैःक्वचामलकमुष्टिभिः अस्पृश्यनेत्रबंधाद्यैःक्वचिन्मृगखगेहया १४ क्वचिच्चदर्दुरप्लावैर्विविधैरुपहासकैः कदाचित्स्पंदोलिकयाकर्हिचिन्नृपचेष्टया १५ एवंतौलोकसिद्धाभिःक्रीडाभिश्चेरतुर्वने नद्यद्रिद्रोणिकुंजेषुकाननेषुसरस्सुच १६ पशूंश्चारयतोर्गोपैस्तद्वनेरामकृष्णयोः गोपरूपीप्रलंबोऽगादसुरस्तज्जिहीर्षया १७ तंविद्वानपिदाशार्होभगवान्सर्वदर्शनः अन्वमोदततत्सख्यंवधंतस्यविचिंतयन् १८ तत्रोपहूयगोपालान्कृष्णःप्राहविहारवित् हेगोपाविहरिष्यामोद्वंद्वीभूययथायथं १९ तत्रचक्रुःपरिवृढौगोपारामजनार्दनौ कृष्णसंघट्टिनःकेचिदासन्रामस्यचापरे २० आचेरुर्विविधाःक्रीडावाह्यवाहकलक्षणाः यत्रारोहंतिजेतारोवहंतिचपराजिताः २१ वहंतोवाह्यमानाश्चचारयंतश्चगोधनम् भांडीरकंवटंनामजग्मुःकृष्णपुरोगमाः २२ रामसंघट्टिनोयर्हिश्रीदामवृषभादयः क्रीडायांजयिनस्तांस्तानूहुःकृष्णादयोनृप २३ उवाहकृष्णोभगवान्श्रीदामानंपराजितः वृषभंभद्रसेनस्तुप्रलंबोरोहिणीसुतं २४

गादित्यत्तरेणान्वयः नदंतःचित्राःमृगाद्विजाश्चयस्मिन् गायंतोमयूराभ्रमराश्चयस्मिन् कूजंतःकोकिलाःसारसाश्चयस्मिन्ततअविशत् ७ ८ ९ १० ११ काकपक्षाःचूडाकरणात्प्राक्तनकेशाः भ्रामणादिप्रकारैर्नियुद्धेनबाहुयुद्धेनचिक्रीडतुः १२ १३ कुंभैःकुंभप्रमाणफलैः अस्पृश्यत्वंनेत्रबंधश्चतदाद्यैर्मृगाणांखगानांचचेष्टया १४ दर्दुरप्लावैःमंडूकप्लुतिभिः स्पंदोलिकयादोलालंबनेन नृपाणामिवलीलया १५ नद्यःअद्रिद्रोणयःकुंजानिचएतेषु १६ चारयतोःसतोःतद्वनेतस्मिन्वनेतयोर्जिहीर्षया १७ १८ यथायथंवयोबलाद्यनुरूपंद्वंद्वीभूय १९ परिवृढौनायकौतत्रकेचनकृष्णसंघट्टिनःकृष्णपक्षीयाः २० २१ वाह्यमानाःपृष्ठेनोह्यमानाः २२ २३ २४ ५ ५ ५

कृष्णाद्दूरेविवेचनाय अवरुह्यतेस्मिन्नित्यवरोहणंमर्यादाततःपरंदूरमगात् २५ धरणिधरेंद्रवद्गौरवंयस्यतं निजमास्फुरंवपुरास्थितः पुरटपरिच्छदः स्वर्णालंकारः ताडिद्युमान्वि
द्युद्दामिमान् इत्यलंकारोपमा उडुपतिवाडिति रामोपमा उडुपतिंवहतीत्युडुपतिवाट् यदिययोचितस्थानेषुस्थिताविद्युतोभवंति उपरिचउडुपतिस्तदासौऽम्बुदोयथाभातितद्वद्भा
तीत्यर्थः २६ अलमातिवेगेन प्रदीप्तेदृशौयस्मिन्वपुषितत् भ्रुकुटितटसंलग्नाउग्रादंष्ट्रायस्मिन्तत् प्रदीप्तदृक्भ्रुकुटितटंयस्मिन्उग्रादंष्ट्रायस्मिन्तच्चज्वलंत्यैवतिवा ज्वलंत्यः शिखाः
केशायस्मिन्तत् २७ आगतस्मृतिरभयइवआत्मनः सार्थंगोपसमूहंविहायहरंतं रिपुमहनत् यद्वा विहायसाआकाशमार्गेणात्मनः प्राप्तमर्थमिवहरंतमिति वज्ररंहसा वज्रवे

अविषह्यंमन्यमानः कृष्णंदानवपुंगवः वहन्द्रुततरंप्रागादवरोहणतःपरम् २५ तमुद्वहन्धरणिधरेंद्रगौरवंमहासुरोविगतरयोनिजंवपुः सआ-
स्थितःपुरटपरिच्छदोबभौतडिद्द्युमानुडुपतिवाडिवांबुदः २६ निरीक्ष्यतद्वपुरलमंबरेचरत्प्रदीप्तदृग्भ्रुकुटितटोग्रदंष्ट्रकम् ज्वलच्छिखंकटककि
रीटकुंडलत्विषाद्भुतंहलधरईषदत्रसत् २७ अथागतस्मृतिरभयोरिपुंबलोविहायसार्थमिवहरंतमात्मनः रुषाहनच्छिरसिदृढेनमुष्टिनासुराधि
पोगिरिमिववज्ररंहसा २८ सआहतःसपदिविशीर्णमस्तकोमुखाद्वमन्रुधिरमपस्मृतोऽसुरः महारवंव्यसुरपतत्समीरयन्गिरिर्यथामघवतआयु-
धाहतः २९ दृष्ट्वाप्रलंबंनिहतंबलेनबलशालिना गोपाःसुविस्मिताआसन्साधुसाध्वितिवादिनः ३० आशिषोभिगृणंतस्तंप्रशशंसुस्तदर्हणम्
प्रेत्यागतमिवालिंग्यप्रेमविह्वलचेतसः ३१ पापेप्रलंबेनिहतेदेवाःपरमनिर्वृताः अभ्यवर्षन्बलंमाल्यैःशशंसुःसाधुसाध्विति ३२ इतिश्रीभा
गवतेमहापुराणेदशमस्कंधेप्रलंबवधोनामाष्टादशोऽध्यायः १८ श्रीशुकउवाच क्रीडासक्तेषुगोपेषुतद्गावोदूरचारिणीः स्वैरंचरंत्योविवि
शुस्तृणलोभेनगह्वरम् १ अजागावोमहिष्यश्चनिर्विशंत्योवनाद्वनम् ईषीकाटवींनिर्विविशुःक्रंदंत्योदावतर्षिताः २ तेऽपश्यंतःपशून्गोपाःकृष्णरामा
दयस्तदा जातानुतापानविदुर्विचिन्वंतोगवांगतिम् ३ तृणैस्तत्खुरदच्छिन्नैर्गोष्पदैरंकितैर्गवाम् मार्गमन्वगमन्सर्वेनष्टाजीव्याविचेतसः ४ मुं
जाटव्यांभ्रष्टमार्गंक्रंदमानंस्वगोधनम् संप्राप्यतृषिताःश्रांतास्ततस्तेसंन्यवर्तयन् ५ ताआहूताभगवतामेघगंभीरयागिरा स्वनाम्नांनिनदंश्रुत्वा
प्रतिनेदुःप्रहर्षिताः ६ ततःसमंताद्वनधूमकेतुर्यदृच्छयाऽभूत्क्षयकृद्वनौकसाम् समीरितःसारथिनोल्बणोल्मुकैर्विलेलिहानःस्थिरजंगमान्महा
न् ७ तमापतंतंपरितोदवाग्निंगोपाश्चगावःप्रसमीक्ष्यभीताः ऊचुश्चकृष्णंसबलंप्रपन्नायथाहरिंमृत्युभयार्दिताजनाः ८ कृष्णकृष्णमहावीर्यहेरा
मामितविक्रम दावाग्निनादह्यमानान्प्रपन्नांस्त्रातुमर्हथः ९ नूनंत्वद्बांधवाःकृष्णनचार्हंत्यवसीदितुम् वयंहिसर्वधर्मज्ञत्वन्नाथास्त्वत्पराय-
णाः १०

गेनमुष्टिना २८ अपस्मृतःगतस्मृतिः महारवंसमीरयन् २९ ३० तदर्हणंप्रशंसार्हम् ३१ ३२ इतिश्रीभागवतेदशमस्कंधेटीकायामष्टादशोऽध्यायः
१८ ऊनविंशेनिविष्टेषुगोपगोकुलमच्युतः मुंजारण्यमरण्याग्नेररक्षत्तन्निपानतः १ दूरचारिणीः दूरचारिण्यः १ वनाद्वनांतरंनिर्विशंत्योदावेनतर्षिताः तृषिताः क्रंदंत्यः इषी
काटवीं अत्युच्छ्रितघनतृणविशेषारण्यंनिर्विविशुः २ कृष्णरामावादीयेषांते नतुतौ ३ तासांगवांखुरैः दद्भिश्चाच्छिन्नैस्तृणैः गोष्पदैरंकितैश्चभूप्रदेशैस्तृणैर्वागवांमार्गमन्वगमन्न
ष्टाजीव्या गतजीविकासाधनाः ४ मुंजाटव्यपिसैवइषीकाटवी ५ ६ गोपानांनाशहेतुर्वनवह्निः सर्वतः प्रादुरभूत् सारथिनावायुना ७ ८ ९ १०

११ कृष्णावगकूरप्रवेशकृतदृङ्भ्रमादिजनितात् १२ क्षणेनैव भांडीरंमापिताः ततः अक्षीण्युन्मील्यविस्मिताः १३ १४ १५ १६ श्रीदामादिस्वगोपानांस्वांगमारुह्यदृह्यतताम् स्वैश्व
र्यमाविरकरोद्दवाग्निनिपानतः १ इतिदशमस्कंधेटीकायां एकोनविंशोऽध्यायः १९ विंशेप्रावृट्शरच्छोभावर्णनेनवनोचिताः प्रावृट्क्रीडानिरूप्यंतेगोपरामसु
जोहरः १ हेयादेयोपमानेनप्रावृड्शरद्दतुश्रियोः वर्णनंत्वद्भुतैश्वर्यकृष्णलीलाविवक्षया २ १ २ तत्रप्रावृड्वर्णनंततआदिद्वाविंशत्यासर्वेषांप्राणिनांसमुद्भवउत्पत्तिर्तोजी
वनतश्चयस्यांसाप्रावृड्विद्योतमानाः परिधयः परिवेषादिशोवायस्यांसाविस्फूर्जितंसंक्षुभितंनभस्तलंयस्यांसा ३ सांद्रैर्निबिडैर्नीलांबुदैर्विद्युद्गर्जितसहितैराच्छन्नंसगुणंगु
णैराच्छन्नंजीवास्यंविद्युद्गर्जितांबुदानांसत्त्वरजस्तमोभिरुपमा ४ पर्जन्यःसूर्यःस्वगोभिः रश्मिभिःकालेयथोचितसमये अत्रराजोपमाकरादानतः समये पुनर्दानतश्चसूचिता

श्रीशुकउवाच वचोनिशम्यकृपणंबंधूनांभगवान्हरिः निमीलयतमाभैष्टलोचनानीत्यभाषत ११ तथेतिमीलिताक्षेषु भगवानग्निमुल्ब
णम् पीत्वामुखेनतान्कृच्छ्राद्योगाधीशोव्यमोचयत् १२ ततश्चतेऽक्षीण्युन्मील्यपुनर्भांडीरमापिताः निशम्यविस्मिताआसन्नात्मानंगाश्चमोचिताः
१३ कृष्णस्ययोगवीर्यंतद्योगमायानुभावितम् दावाग्नेरात्मनःक्षेमंवीक्ष्यतेमेनिरेऽमरम् १४ गाःसन्निवर्त्यसायान्हेसहरामोजनार्दनः वेणुंविरण
यन्गोष्ठमगाद्गोपैरभिष्टुतः १५ गोपीनांपरमानंदआसीद्गोविंददर्शने क्षणंयुगशतमिवयासांयेनविनाऽभवत् १६ इतिश्रीभागवतेमहा
पुराणेदशमस्कंधेदावाग्निपानंनामएकोनविंशोऽध्यायः १९ श्रीशुकउवाच तयोस्तदद्भुतंकर्मदावाग्नेर्मोक्षमात्मनः गोपाःस्त्रीभ्यः
समाचख्युः प्रलंबवधमेवच १ गोपवृद्धाश्चगोप्यश्चतदुपाकर्ण्यविस्मिताः मेनिरेदेवप्रवरौकृष्णरामौव्रजंगतौ २ ततःप्रावर्ततप्रावृट्सर्वस
त्त्वसमुद्भवा विद्योतमानपरिधिर्विस्फूर्जितनभस्तला ३ सांद्रनीलांबुदैर्व्योमसविद्युत्स्तनयित्नुभिः अस्पष्टज्योतिराच्छन्नंब्रह्मेवसगुणंबभौ
४ अष्टौमासान्निपीतंयद्भूम्याश्चोदमयंवसु स्वगोभिर्मोक्तुमारेभेपर्जन्यःकालआगते ५ तडिद्वंतोमहामेघाश्चंडश्वसनवेपिताः प्रीणनंजी
वनंह्यस्यमुमुचुःकरुणाइव ६ तपःकृशादेवमीढाआसीद्वर्षीयसीमही यथैवकाम्यतपसस्तनुःसंप्राप्यतत्फलम् ७ निशामुखेषुखद्योतास्तम
साभांतिनग्रहाः यथापापेनपाखंडानहिवेदाःकलौयुगे ८ श्रुत्वापर्जन्यनिनदंमंडूकाव्यसृजन्गिरः तूष्णींशयानाःप्राग्यद्वद्ब्राह्मणानियमात्यये
९ आसन्नुत्पथवाहिन्यःक्षुद्रनद्योऽनुशुष्यतीः पुंसोयथाऽस्वतंत्रस्यदेहद्रविणसंपदः १० हरिताहरिभिःशष्पैरिंद्रगोपैश्चलोहिता उच्छिलीं
ध्रकृतच्छायानृणांश्रीरिवभूरभूत् ११ क्षेत्राणिसस्यसंपद्भिःकर्षकाणांमुदंददुः धनिनामुपतापंचदैवाधीनमजानताम् १२

५ अस्यविश्वस्यप्रीणनमाप्यायनकरंजीवनमुदकंमुमुचुः कृपालवोयथातप्तंजनंनिरीक्ष्यानुकंपमानाः तदाप्यायनायस्वजीवनमपित्यजंति तद्वन्महांतोमेघास्तडि-
त्वंतोविश्वंतप्तंनिरीक्ष्यवायुभिर्वेपिताजीवनंमुमुचुरिति ६ तपसाग्रीष्मेणकृशादेवमीढापर्जन्यसिक्तावर्षीयसीउच्छूनापुष्टा काम्यंतपोयस्यतस्यतनुः कामान्संप्राप्ययथे
ति ७ ८ नित्यकर्मावसाने आचार्यनिनदंश्रुत्वातच्छिष्याः यथाधीयंतेतद्वदिति ९ अनुशुष्यतीः अनुशुष्यंत्यः अस्वतंत्रस्यइंद्रियपरतंत्रस्यस्वतंत्रस्यनिरंकुशस्येतिवा
१० हरिभिर्नीलैःशष्पैः बालतृणैःनीलवर्णा क्वचित्इंद्रगोपैः कीटविशेषैर्लोहितातत्रतत्रउच्छिलीध्रैः छत्राकारैरुद्भिदैः कृतच्छायानृणांराज्ञांश्रीःसेनासंपदिव ११ क्षे
त्राणीति तदाहिदृष्टेरविच्छेदेलसंतःप्रियंग्वादयोमुदंददतिविच्छेदेसुष्यंतोऽनुतापंचेति १२ ५ ५ ५ ५ ५

अविभ्रन् अविभरुः यथाहरिनिषेवयेतिहरिसेवायांप्रवृत्ताहिसय एवसर्वेकचिरामवंतितस्याः परमधर्मत्वात् परमस्फरत्वात् चतद्वदिति १३ कामान्कंकामवासनायुक्तमितिश्वसनो
र्मिसाम्यं गुणैर्विषयैर्युज्यत इतिसरित्संगातिसाम्यम् १४ अधोक्षजएव चेतोयेषांते १५ असंस्कृताअक्षुण्णाः नाभ्यस्यमाना इत्यसंस्कृतसाम्यम् कालेनचाहता इतितृणाच्छादनसा
म्यम् १६ यथाकामिन्यः पुंश्चल्यः १७ निर्गुणंज्याराहितमपिगुणिनिगर्जितशब्दवति अभात् अशोभत गुणव्यतिकरात्मकेव्यक्तेप्रपंचे अगुणवान्निर्गुणः पुरुषोययेति १८ स्वभासा
भासितया अहंमत्योनिस्वचैतन्येनैवप्रकाशितेनाहंकारेणच्छन्नोजीवोयथा यद्वा अहंविद्वान्दाताचेत्याशूर इतिस्वप्रतीत्यैवारोपितयाइति १९ मेघागमेनोत्सवोयेषामतोहृष्टाः २०
नानात्ममूर्तयः अनेकरूपदेहाः २१ अशांतानिपंककंटकादियुक्तानिरोधांसितटानियेषांतेषपिन्यूषुः नितरामवसन् सारसाः चक्रवाकाः अशांतानियोराणि अनुपरतानिवाकृत्यानि

जलस्थलौकसः सर्वेनववारिनिषेवया अबिभ्रद्रुचिरंरूपंयथाहरिनिषेवया १३ सरिद्भिः संगतःसिंधुश्चुक्षुभेश्वसनोर्मिमान् अपक्वयोगिनश्चित्तं
कामाक्तंगुणयुग्यथा १४ गिरयोवर्षधाराभिर्हन्यमानानविव्यथुः अभिभूयमानाव्यसनैर्यथाधोक्षजचेतसः १५ मार्गाबभूवुःसंदिग्धास्तृणैश्छन्ना
ह्यसंस्कृताः नाभ्यस्यमानाःश्रुतयोद्विजैःकालहताइव १६ लोकबंधुषुमेघेषुविद्युतश्चलसौहृदाः स्थैर्यंनचक्रुःकामिन्यःपुरुषेषुगुणिष्विव १७ धनुर्वि
यतिमाहेंद्रंनिर्गुणंचगुणिन्यभात् व्यक्तेगुणव्यतिकरेऽगुणवान्पुरुषोयथा १८ नरराजोडुपश्छन्नःस्वज्योत्स्नाराजितैर्घनैः अहंमत्याभासितयास्वभा
सापुरुषोयथा १९ मेघागमोत्सवाहृष्टाःप्रत्यनंदन्शिखंडिनः गृहेषुतप्तानिर्विण्णायथाऽच्युतजनागमे २० पीत्वाऽपःपादपाःपद्भिरासन्नानात्ममूर्तयः
प्राक्क्षामास्तपसाश्रांतायथाकामानुसेवया २१ सरस्स्वशांतरोधस्सून्यूषुरंगापिसारसाः गृहेष्वशांतकृत्येषुग्राम्याइवदुराशयाः २२ जलौघैर्निरभिद्यं
तसेतवोवर्षतीश्वरे पाखंडिनामसद्वादैर्वेदमार्गाःकलौयथा २३ व्यमुंचन्वायुभिर्नुन्नाभूतेभ्योऽथामृतंघनाः यथाशिषोविश्पतयःकालेकालेद्विजेरि
ताः २४ एवंवनंतद्वर्षिष्ठंपक्वखर्जूरजंबुमत् गोगोपालैर्वृतोरंतुंसबलःप्राविशद्धरिः २५ धेनवोमंदगामिन्यऊधोभारेणभूयसा ययुर्भगवताहूता
द्रुतंप्रीत्यास्नुतस्तनीः २६ वनौकसःप्रमुदितावनराजीर्मधुच्युतः जलधारागिरेर्नादानासन्नाददृशेगुहाः २७ क्वचिद्वनस्पतिक्रोडेगुहायांचाभिवर्ष
ति निर्विश्यभगवान्रेमेकंदमूलफलाशनः २८ दध्योदनंसमानीतंशिलायांसलिलांतिके संभोजनीयैर्बुभुजेगोपैःसंकर्षणान्वितः २९ शाद्वलोपरिसं
विश्यचर्वतोमीलितेक्षणान् तृप्तान्वृषान्वत्सतरान्गाश्चस्वोधोभरश्रमाः ३० प्रावृट्श्रियंचतांवीक्ष्यसर्वभूतमुदावहाम् भगवान्पूजयांचक्रेआ
त्मशक्त्युपबृंहिताम् ३१ एवंनिवसतोस्तस्मिन्रामकेशवयोर्व्रजे शरत्समभवद्व्यभ्रास्वच्छांब्वपरुषानिला ३२ शरदानीरजोत्पत्त्यानीराणिप्रकृतिं
ययुः भ्रष्टानामिवचेतांसिपुनर्योगनिषेवया ३३

येषुतेष्वपिगृहेषु २२ ईश्वरेइंद्रे २३ नुन्नाः प्रेरिताः आशिषः कामान् विश्पतयोराजानः वणिजांपतयोवा द्विजेरि
ताःपुरोहितैरुक्ताः २४ प्रावृषिकृतांक्रीडांवर्णयति एवंवनमितिसप्तभिः वर्षिष्ठंसमृद्धम् २५ २६ वनौकसःपुलिंदाः प्रमुदिताः भगवान्ददृशे तथावनराजीः मधुच्युतः मधुस्रवाःद
दृशे गिरेः सकाशाज्जलधाराश्चतासांनादान् आसन्नानिकटवर्तिनीर्गुहाश्च यद्वा वनौकसः प्रमुदिताआसन् तथावनराजीः वनराजयः वनपरंपराः मधुच्युतआसन् गिरेर्जलधाराआ
सन् तानेवंभूतान्ददृशे सर्वतोददर्श तथाभगवान्धाराणांनादान्गुहाश्चेति २७ २८ २९ ३० ३१ शरदंवर्णयति एवंनिवसतोरित्यष्टादशभिः विगतानिअभ्राणियस्यांसास्व
च्छानिअंबूनियस्यांसा अपरुषः शांतोनिलोयस्यांसाचसाच ३२ नीरजानामुत्पत्तिर्ययातयाशरदाकृत्वा नीरजानामुत्पत्त्यावा ३३ ध ध ध

व्योम्नोऽब्दमिति व्योमादीनां चतुर्णां चतुरो मलान् शरदहरत् आश्रमिणां चतुर्णां कृष्णे जाता भक्तिर्यथाऽशुभमसत्त्वं हरति तथाहि ब्रह्मचारिणो गुर्वर्थोदकाहरणकष्टं यथा भक्तिर्हरति तथा पूर्णस्य तेनानुपयोगात् गुरुभिरपि कृतार्थस्य तस्यानियोगात् एवं व्योम्नोऽब्दं शरज्जहार यथा च गृहिणोऽपत्यादिसांकर्यं भक्तिर्हरति विविक्तवासरुच्युत्पत्तेः तथा भूतानां शाबल्यं सांकर्यं शरत् वर्षासु हि प्राणिभिर्यासंकुलानि वसंति यथा च वनस्थस्य मलधारणक्लेशं भक्तिर्हरति एवं भुवः पंकं शरत् यथा च यतीनां कामादिवासनामलं श्री कृष्णभक्तिर्हरति एवमपां मलं शरदिति ३४ त्यक्तैषणाः त्यक्ताः पुत्रवित्तलोकैषणा यैस्ते ३५ गिरय इति अयं भावः नह्यपाध्यायाः कर्मविद्या मिव ज्ञानिनो ज्ञानामृतं सर्वतो वितरंति अपितु कृपया क्वचिदेव एवं गिरयः शिवं निर्मलं तोयं क्वचिन्मुमुचुः क्वचिन्न न पुनः प्रावृषीव सर्वत इति ३६ गाधे क्षुद्रे जले चरंतीति तथा ते मीनादयः अविंदन् लेभिरे ३७ ३८ शनैः शनैरिति तत्र ममतामिव पंकमहंतामिव आमतामपक्वतां जहुरिति ३९ आत्मन्युपरते त्यक्तक्रियो मुनिरिवानिश्चलांबुः स एव व्युपरतागमः निवृत्तवेदघोषइव तूष्णीमभूदिति ४० केदारेभ्यो बद्धशा-

व्योम्नोऽब्दं भूतशाबल्यं भुवः पंकमपां मलम् शरज्जहाराश्रमिणां कृष्णे भक्तिर्यथाऽशुभम् ३४ सर्वस्वं जलदा हित्वा विरेजुः शुभ्रवर्चसः यथा त्यक्तैषणाः शांता मुनयो मुक्तकिल्बिषाः ३५ गिरयो मुमुचुस्तोयं क्वचिन्न मुमुचुः शिवम् यथा ज्ञानामृतं काले ज्ञानिनो ददते न वा ३६ नैवाविदन् क्षीयमाणं जलं गाधजलेचराः यथायुरन्वहं क्षय्यं नरा मूढाः कुटुंबिनः ३७ गाधवारिचरास्तापमविंदन् शरदर्कजम् यथा दरिद्रः कृपणः कुटुंब्यविजितेंद्रियः ३८ शनैः शनैर्जहुः पंकं स्थलान्यामं च वीरुधः यथाहंममतां धीराः शरीरादिष्वनात्मसु ३९ निश्चलांबुरभूत्तूष्णीं समुद्रः शरदागमे आत्मन्युपरते सम्यङ्मुनिर्व्युपरतागमः ४० केदारेभ्यस्त्वपोऽगृह्णन् कर्षका दृढसेतुभिः यथा प्राणैः स्रवज्ज्ञानं तन्निरोधेन योगिनः ४१ शरदर्कांशुजांस्तापान् भूतानामुडुपोऽहरत् देहाभिमानजं बोधो मुकुंदो व्रजयोषिताम् ४२ खमशोभत निर्मेघं शरद्विमलतारकम् सत्त्वयुक्तं यथा चित्तं शब्दब्रह्मार्थदर्शनम् ४३ अखंडमंडलो व्योम्नि रराजोडुगणैः शशी यथा यदुपतिः कृष्णो वृष्णिचक्रावृतो भुवि ४४ आश्लिष्य समशीतोष्णं प्रसूनवनमारुतम् जनास्तापं जहुर्गोप्यो न कृष्णहृतचेतसः ४५ गावो मृगाः खगा नार्यः पुष्पिण्यः शरदाभवन् अन्वीयमानाः स्ववृषैः फलैरीशक्रिया इव ४६ उदहृष्यन्वारिजानि सूर्योत्थाने कुमुद्विना राज्ञा तु निर्भया लोका यथा दस्यून्विना नृप ४७ पुरग्रामेष्वाग्रयणैरिंद्रियैश्च महोत्सवैः बभौ भूः पक्वसस्याढ्या कलाभ्यां नितरां हरेः ४८ वणिङ्मुनिनृपस्नाता निर्गम्यार्थान्प्रपेदिरे वर्षरुद्धा यथा सिद्धाः स्वपिंडान्काल आगते ४९ इति श्रीभा॰द॰ शरद्वर्णनं नाम विंशतितमोऽध्यायः २०

लिक्षेत्रेभ्यो दृढैः सेतुभिरपोऽग्रगृह्णन् ततः परं ह्रस्वभावात् प्राणैरिंद्रियैस्तन्निरोधेन इंद्रियप्रत्याहारेण ४१ देहाभिमानजं बोधइव व्रजयोषितां मुकुंदइव चेत्यर्थः ४२ शरदा विमलातारका यस्मिन्तत् शब्दब्रह्मणो वेदस्यार्थान्पूर्वोत्तरमीमांसानिर्णीतान्दर्शयतीति तथा तद्वत् ४३ ४४ समः अन्यूनाधिकः शीतश्चोष्णश्च तं न तु गोप्यः कृष्णापहृतचेतस्त्वेन तासां संतापो दुःसह इति यद्वा नकार उपमार्थः तदा कृष्णाहृतचेतस इति चेतसा कृष्णमाश्लिष्य यथेत्यर्थः ४५ पुष्पिण्यः गर्भिण्यः अन्वीयमानाः स्ववृषैः स्वपतिभिः अनिच्छंत्योऽपि बलादनुगम्यमानाः ईश्वराराधनार्थाः क्रियाः बलात्फलैरनुगम्यमानाः समस्तभोगगर्भा यथेति ४६ कुसु कुमुद् कुत्सितामुत् यस्येति दस्युसाम्यं ४७ आग्रयणे नवान्नप्राशनार्थैर्वैदिकैर्यागैरिंद्रियैरिंद्रियार्थैर्लौकिकैश्च महोत्सवैः कलाभ्यां रामकृष्णाभ्यां दर्शनादिमहोत्सवाभ्यां ४८ वणिजो यतयो नृपाः स्नातकाश्च द्वाभ्यां वर्षरुद्धाः संतो निर्गम्यार्थान्वाणिज्यस्वाच्छंद्यदिग्विजयविद्यादीन्प्रपेदिरे प्रापयंत यथा मंत्रयोगादिसिद्धाः आयुषा रुद्धाः काले आगते स्वपिंडान्योगादिप्राप्यान् देवादिदेहानिति ४९ इति दशमस्कंधे टीकायां विंशतितमोऽध्यायः २०

३ ४ ५ तस्य वैकुंठस्य संज्ञस्य हरेरनुभावः सनकादिशापेन दैत्यतां प्राप्ताभ्यां स्वपार्षदाभ्यां वाराहादिरूपेण युद्धादिलक्षणः गुणाश्च ब्रह्मण्यतादयः परमोदयाश्च महर्द्धयः क
थिताः तृतीयस्कंधादिषु ६ ७ ८ ९ १० यतो हेतोः अंबुचरात्मना कूर्मरूपेण ११ सुराणां साधिता सुधेत्युक्त्या सुधायाः अपि सूचितम् अतः पृच्छति किंचान्यदिति १२ १३ १४
नो निष्ठेरन्न पुनर्जीवितिस्येत्यर्थः १५ दुर्वाससा हि कदाचिन्मार्गे गच्छता मिंद्रं दृष्ट्वा स्वकंठस्था मालातस्मै दत्ता तेन च श्रीमदेनानादृत्य ऐरावतस्य कुंभयोर्निक्षिप्ता स च गजो मत्तः पद्भ्यां तां मालां
चूर्णीचकार ततः कुपितो दुर्वासास्तं शशाप त्रिभिर्लोकैः सह त्वं निःश्रीको भवेति तदेतदाह यदा दुर्वाससः शापादिति इज्यादयः क्रियाः १६ १७ १८ असुरान् अयथा देवैर्बलिप्र

हिरण्यरोमा वेदशिरा ऊर्ध्वबाह्वादयो द्विजाः ३ पत्नी विकुंठा शुभ्रस्य वैकुंठैः सुरसत्तमैः तयोः स्वकलया जज्ञे
विभुरिंद्रः सुरगणा राजन्भूतरयादयः हिरण्यरोमा वे... रमया प्रार्थ्यमानेन देव्या तत्प्रियकाम्यया ५ तस्यानुभावः कथितो गुणाश्च परमोदयाः
वैकुंठो भगवान्स्वयम् ४ वैकुंठः कल्पितो येन लोको लोकनमस्कृतः पुरःपुरुषसुद्युम्नप्रमुखाश्चाक्षुषात्मजाः ७ इंद्रो मंत्रद्रुमस्तत्र
भौमान्रेणून्स विममे यो विष्णोर्वर्णयेद्गुणान् ६ षष्ठश्च चक्षुषः पुत्रश्चाक्षुषो नाम वै मनुः अजितो नाम भगवानंशेन जगतः पतिः ९ पयो
देवा आप्यादयो गणाः मुनयस्तत्र वै राजन्हविष्मद्वीरकादयः ८ तत्रापि देवः संभूत्यां वैराजस्याभवत्सुतः यथा भगवता ब्रह्मन्मथितः क्षीरसागरः यदर्थं वा
धियेन निर्मथ्य सुराणां साधिता सुधा भ्रममाणोऽम्भसि धृतः कूर्मरूपेण मंदरः १० राजोवाच तयासंकथ्यमानेन महिम्नासात्व
यतश्चाद्रिं दधाराम्बुचरात्मना ११ यथामृतं सुरैः प्राप्तं किंचान्यदभवत्ततः एतद्भगवतः कर्म वदस्व परमाद्भुतम् १२ अभिनंद्य हरेर्वीर्यमभ्याचष्टुं
तांपतेः नातितृप्यति मे चित्तं सुचिरं तापतापितम् १३ सूत उवाच संपृष्टो भगवानेवं द्वैपायनसुतो द्विजाः यदा दुर्वाससः शापात्स
प्रचक्रमे १४ श्रीशुक उवाच यदा युद्धेऽसुरैर्देवा बाध्यमानाः शितायुधैः गतासवो निपतिता नोत्तिष्ठेरन्स्म भूयशः १५ नाध्यगच्छन्स्वयं मंत्रैर्मंत्रयंतो विनिश्चयम्
द्रालोकास्त्रयो नृप निःश्रीकाश्चाभवंस्तत्र नेशुरिज्यादयः क्रियाः १६ निशाम्यैतत्सुरगणा महेंद्रवरुणादयः लोकानमंगलप्रा
१७ ततो ब्रह्मसभां जग्मुर्मेरोर्मूर्द्धनि सर्वशः सर्वं विज्ञापयांचक्रुः प्रणताः परमेष्ठिने १८ स विलोक्येंद्रवाय्वादीन्निःसत्वान्विगतप्रभान् अहं भवो यूयमथोऽसुरादयो मनुष्यति
यानसुरानथ यो विभुः १९ समाहितेन मनसा संस्मरन्पुरुषं परम् उवाचोत्फुल्लवदनो देवान्स भगवान्परः २० नयस्य वध्यो न च रक्षणीयो नोपेक्षणीयादरणीयपक्षः अथापि सर्ग
र्यक्द्रुमघर्मजातयः यस्यावतारांशकलाविसर्जिता व्रजाम सर्वे शरणं तमव्ययम् २१ स्थितिसंयमार्थं धत्ते रजः सत्त्वतमांसि काले २२ अयं च तस्य स्थितिपालनक्षणः सत्त्वं जुषाणस्य भवाय देहिनाम् तस्माद्व्रजामः शरणं जगद्गुरुं स्वानां स नो
धास्यति शं सुरप्रियः २३ श्रीशुक उवाच इत्याभाष्य सुरान्वेधाः सह देवैररिंदम अजितस्य पदं साक्षाज्जगाम तमसः परम् २४

ण्येन बलपुष्ट्यादियुक्तान् विलोक्येत्यर्थः १९ हरिं शरणं गताः संतो यथापूर्वं सर्वं प्राप्स्याम इति हर्षेणोत्फुल्लं विकासितं वदनं यस्य २० मनुष्यादयो जरायुजांडजोद्भिज्जस्वेदजाः
यस्यावतारः पुरुषः तस्यांशो ब्रह्मा तस्य कला मरीच्यादयः ताभिर्विसर्जिताः पुत्रपौत्रादिद्वारा जनिताः २१ ननु तर्हि सर्वेषु सोऽसमः स्यात् किं तच्छरणाश्रयेण सत्यम् यद्यप्येवं
तथाऽप्यस्मत्पक्षपाती भविष्यतीत्याशयेनाह नयस्येति द्वाभ्याम् स्थितिपालनस्य क्षणः कालः अतः सुरप्रियः सन् स्वीयानां नः शं सुखं करिष्यति २२ २३ यत्र क्षीराब्धौ
हरेर्वासस्तदेव तमसः परं स्थानम् यद्वा लोकालोकात्परतो यत्तमस्ततः परम् स्थानं जगाम २४ ५ ५ ५ ५ ५

देवीभिः लोके अप्रसिद्धाभिः वैदिकीभिर्गीर्भिः स्तुतिमकरोत् २५ देववरं त्वां नमामहे देववरं त्वां नमामेति वा वरत्वहेतुः सत्यम् कुतः अविक्रियं तत्कुतः अनंतं आद्यं च अनादिं
आद्यंतवंतो हि रस्यादिविक्रियायुक्ता भवंति किंच गुहाशयं सर्वांतरम् कुतः निष्कलं निरुपाधिकम् तत्कुतः अप्रतर्क्यम् तत्कुतः मनोऽग्रयानं मनसोऽपि जविष्ठं मनः प्राप्स्यस्थाने-
तनः प्रागेव विद्यमानत्वात् तथा च श्रुतिः अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्पूर्वमर्शत् तद्धावतोऽन्यानत्येति तिष्ठदिति वचसा अनिरुक्तं अविषयत्वात् यद्वाचानभ्युदितं
येन वागभ्युद्यते इति श्रुतेः मनोवचसोरगोचरत्वादप्रतर्क्यं यथेष्टं वा सर्वेषां हेतुहेतुमद्भावः २६ किंच प्राणादीनां विपश्चितं ज्ञातारं आत्मा अहंकारो देहो वान्यस्तद्व्यतिरिक्तं ज्ञे
यमस्तीत्याह अर्थो विषयः इंद्रियाणि तद्ग्राहकाणि तदुभयरूपेणाभासत इति तथातं तथाप्यनिद्रं स्वप्नद्रष्टृवदज्ञानरहितम् कुतः अव्रणम् अदेहम् अत एव अक्षरं खमिव व्या
पिनं च सर्वत्र हेतुः यत्र यस्मिन् गृध्रपक्षो जीवपक्षपातिनौ छायातपौ अविद्या च तन्निवर्तका विद्या च नाक्षितम् त्रियुगेष्वाविर्भवंतं शरणं व्रजाम २७ तदेवमविक्रियत्वादिभिः
सर्वज्ञत्वादिभिश्च सत्यत्वं वरेण्यत्वं चोक्तं संसारचक्राधारत्वेनापि तदेव दर्शयन्नाह अजस्य जीवस्य चक्रम् चक्रवदावर्तमानं देहादि अजया मायया प्रेर्यमाणं यत्पुः अक्षो यस्य
यदधिष्ठानमाहुस्तमृतं सत्यं प्रपद्ये कथंभूतं चक्रम् मनोमयं मनः प्रधानं दशेंद्रियाणि पंच प्राणाश्चेत्येवं पंचदश आरा यस्य आशु शीघ्रगम् त्रयो गुणा नाभिरिव मध्ये यस्य विद्यु

तत्राह दृष्टस्वरूपाय श्रुतपूर्वाय वै विभो स्तुतिमब्रूतदेवीभिर्गीर्भिस्त्ववहितेंद्रियः २५ ब्रह्मोवाच अविक्रियं सत्यमनंतमाद्यं गुहाश
यं निष्कलमप्रतर्क्यम् मनोऽग्रयानं वचसाऽनिरुक्तं नमामहे देववरं वरेण्यम् २६ विपश्चितं प्राणमनोधियात्मनामर्थेंद्रियाभासमनिद्रमव्रणं
छायातपौ यत्र न गृध्रपक्षौ तमक्षरं खं त्रियुगं व्रजामहे २७ अजस्य चक्रं त्वजयेर्यमाणं मनोमयं पंचदशारमाशु त्रिणाभि विद्युच्चलमष्टनेमिय
दक्षमाहुस्तमृतं प्रपद्ये २८ य एकवर्णं तमसः परं तदलोकमव्यक्तमनंतपारम् आसांचकारोपसुपर्णमेनमुपासते योगरथेन धीराः २९ न यस्य कश्चा
तितितर्ति मायां यया जनो मुह्यति वेद नार्थम् तं निर्जितात्मात्मगुणं परेशं नमाम भूतेषु समं चरंतम् ३० इमे वयं तत्प्रिययैव तन्वा सत्त्वेन सृष्टा बहि
रंतराविः गतिं न सूक्ष्मामृषयश्च विद्महे कुतोऽसुराद्या इतरप्रधानाः ३१ पादौ महीयं स्वकृतैव यस्य चतुर्विधो यत्र हि भूतसर्गः स वै महापूरुष आत्मतं
त्रः प्रसीदतां ब्रह्ममहाविभूतिः ३२ दिव्चलम् अष्टौ प्रकृतयो नेमय इवावरणानि यस्य २८ सर्वजीवनियंतृत्वादिना च वरिष्ठत्वमाह य इति य उपसुपर्णं जीवसमीपेत
न्नियंतृत्वेन आसांचकार आस्तेस्म द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजात इति श्रुतेः यद्वा भक्तरक्षार्थं गरुडस्योपरि उपविष्ट इत्यर्थः तर्हि देहस्थत्वात् भक्तरक्षणादिक्रि
यावेशात् जीवसाम्यं स्यात्तत्राह एकवर्णं ज्ञानैकस्वरूपम् तमसः प्रकृतेः परम् अलोकमदृश्यम् अव्यक्तं निर्विकल्पं अनंतपारम् कालतो देशतश्चापरिच्छिन्नं ततश्च ब्रह्मैव यः अप्रच्युत
स्वरूपत्वात् न जीवसाम्यम् तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीतीति विशेषश्रवणादित्यर्थः अत एव यं धीराः योगेन रथेन प्राप्तिसाधनेनोपासते भजंते तं नमामेत्युत्तरे
णान्वयः २९ मायानियंतृत्वेनापि जीवसाम्यं परिहरन्वरिष्ठत्वमाह यस्य मायां कश्चित् कश्चिदपि नातितितर्ति नातिक्रामति कथंभूतां जनो यया मुह्यति अर्थमात्मस्वरूपं न तु वेद नि
र्जित आत्मा आत्मशक्तिर्माया च तद्गुणाश्च येन तम् ३० अर्थं न वेदेति यदुक्तं तत्प्रपंचयन्नाह इमे वयं देवा ऋषयश्च यस्य प्रियया तन्वा सत्त्वेन सृष्टा अपि बहिरंतश्च सत्ता प्रकाशाभ्या
माविः प्रकटमपि सूक्ष्मां गतिं निरुपाधिस्वरूपं न विद्मः इतरप्रधानाः रजस्तमोमयाः कुतो विदुः तन्नमामेति पूर्वेणान्वयः ३१ इदानीं वैराजरूपेण स्तुवन् प्रार्थयते पादौ महीति द्वाद
शभिः यत्र मह्यां जरायुजादिभूतसर्गः सा मही यस्य पादौ स नः प्रसीदतु आत्मतंत्रः पादादिमत्त्वेऽपि न परतंत्रः कुतः ब्रह्म अप्रच्युतरूपः तत्कुतः महती विभूतिरैश्वर्यं यस्य सः ३२

उदारंवीर्यंशक्तिर्यस्य तदंभोयस्यरेतः सनः प्रसीदतु उदारवीर्यतामाह यतोंऽभसोलोकादयःसिध्यंतिजायंते ३३ यःसोमोदेवानामंधः अन्नं अतएवबलमायुश्चनगानांवृक्षाणाम् प्रक
र्षेणजनयतिवर्द्धयतीतिप्रजनः तंयस्यमनः समामनंति सनःप्रसीदतु ३४ अग्निर्यस्यतुमुखंजातः कथंभूतः जातवेदोधनंयस्मात् क्रियाकांडंतत्प्रतिपाद्यंकर्मतन्निमित्तंजन्मयस्य
अंतःसमुद्रे उदरमध्येस्वधातून् पाकार्हानेवान्नादीन् अनुपचन् प्रसिद्धसमुद्रेऽपिवाडवरूपेणउदकान्येवानुपचन्नग्निः ३५ एषतरणिर्यस्यचक्षुरासीत् कथंभूतः देवयानं अर्चिरा
दिमार्गदेवतात्रयीमयः सैषात्रय्येवविद्यातपतीतिश्रुतेः ब्रह्मणोधिष्ण्यमुपासनास्थानम् यएषोंतरादित्येहिरण्मयःपुरुषइतिश्रुतेः मुक्तेर्द्वारंदेवयानत्वात् अमृतंचपुण्यलोकत्वा
त् मृत्युश्चकालात्मकत्वात् एवंभूतस्तरणिर्यस्यचक्षुः सःप्रसीदतु ३६ एवंभूतोवायुश्चराचराणांसह आदिधर्मवान् प्राणः यंप्राणंवयंबुध्याद्यधिष्ठातारोदेवाः सम्राजंभृत्याइवअ
न्वास्म अनुसृत्यस्थिताः एवंभूतोवायुर्यस्यप्राणादभूत्सः ३७ खानिदेहगतानिच्छिद्राणि प्राणःपंचवृत्तिः इंद्रियाणिच आत्मामनश्च असवोनागकूर्मादयः शरीरंचतेषां केतमाश्रय

अंभस्तुयद्रेतउदारवीर्यंसिध्यंतिजीवंत्युतवर्द्धमानाः लोकायतोऽथाखिललोकपालाः प्रसीदतांनःसमहाविभूतिः ३३ सोमंमनोयस्यसमामनंतिदिवौ
कसांचबलमंधआयुः ईशोनगानांप्रजनःप्रजानांप्रसीदतांनःसमहाविभूतिः ३४ अग्निर्मुखंयस्यतुजातवेदाजातःक्रियाकांडनिमित्तजन्मा अंतःसमु
द्रेनुपचन्स्वधातून्प्रसीदतांनःसमहाविभूतिः ३५ यच्चक्षुरासीत्तरणिर्देवयानंत्रयीमयोब्रह्मणएषधिष्ण्यम् द्वारंचमुक्तेरमृतंचमृत्युःप्रसीदतांनःसम
हाविभूतिः ३६ प्राणादभूद्यस्यचराचराणांप्राणःसहोबलमोजश्चवायुः अन्वास्मसम्राजमिवानुगावयंप्रसीदतांनःसमहाविभूतिः ३७ श्रोत्राद्दिशोयस्यहृ
दश्चखानिप्रजज्ञिरेखंपुरुषस्यनाभ्याः प्राणेंद्रियात्मासुशरीरकेतःप्रसीदतांनःसमहाविभूतिः ३८ बलान्महेंद्रस्त्रिदशाःप्रसादात्मन्योर्गिरीशोधिषणाद्वि
रिंचः खेभ्यश्चछंदांस्यृषयोमेढ्रतःकःप्रसीदतांनःसमहाविभूतिः ३९ श्रीर्वक्षसःपितरश्छाययाऽऽसन्धर्मस्तनादितरःपृष्ठतोऽभूत् द्यौर्यस्यशीर्ष्णोऽप्सरसोवि
हारात्प्रसीदतांनःसमहाविभूतिः ४० विप्रोमुखंब्रह्मचयस्यगुह्यंराजन्यआसीद्भुजयोर्बलंच ऊर्वोर्विडोजोंऽघ्रिरवेदशूद्रोप्रसीदतांनःसमहाविभूतिः ४१
लोभोऽधरात्प्रीतिरुपर्यभूद्द्युतिर्नस्तःपशव्यःस्पर्शेनकामः भ्रुवोर्यमःपक्ष्मभवस्तुकालःप्रसीदतांनःसमहाविभूतिः ४२ द्रव्यंवयःकर्मगुणान्विशेषंयद्योग
मायाविहितान्वदंति यद्दुर्विभाव्यंप्रबुधापबाधंप्रसीदतांनःसमहाविभूतिः ४३ नमोऽस्तुतस्माउपशांतशक्तयेस्वाराज्यलाभप्रतिपूरितात्मने गुणेषु
मायारचितेषुवृत्तिभिर्नसज्जमानायनभस्वदूतये ४४ सत्वंनोदर्शयात्मानमस्मत्करणगोचरम् प्रपन्नानांदिदृक्षूणांसस्मितंतेमुखांबुजम्
४५ तैस्तैःस्वेच्छाधृतैरूपैःकालेकालेस्वयंविभो कर्मदुर्विषहंयन्नोभगवांस्तत्करोतिहि ४६

भूतंखं यस्यपुरुषस्यनाभ्याः प्रजज्ञेसः ३८ यस्यबला
न्महेंद्रोजज्ञे छंदांसिऋषयश्चखेभ्यः कःप्रजापतिः ३९ इतरः अधर्मः ४० विट्वैश्यः ओजः नैपुण्यंतस्यवृत्तिः अंघ्रिः अंघ्रिजोइत्यर्थः अवेदशूद्रो अवेदावेदव्यतिरिक्तासुश्रू
षातद्वृत्तिमान्शूद्रश्च पाठांतरंसुगमम् ४१ उपरिउत्तरोष्ठात् नस्तःनासिकातः द्युतिःकांतिः पशव्यःपशूनांहितःकामः स्पर्शेनाभूत् ४२ द्रव्यंभूतानि वयःकालं विशेषंलौकि
कप्रपंचं यद्यस्माद्दुर्विभाव्यम् कुतः प्रबुधापबाधंविद्वद्भिरपोह्यमानम् पाठांतरेप्रबुधानांमायेत्यवबोधोयस्मिन्नित्यर्थः ४३ तदेवंसप्रपंचमुपवर्ण्यनिष्प्रपंचमनुवर्णयन् प्रणा
मति नमोस्त्विति वृत्तिभिर्दर्शनादिभिः नभस्वान्वायुः तस्येवऊतिः लीलायस्यतस्मै ४४ सस्मितंमुखांबुजंदिदृक्षूणांनोऽस्मच्चक्षुरादिकरणगोचरंयथाभवत्येवंस्वात्मानंद
र्शय ४५ भक्तेच्छाऽनुवर्तित्वंचतवबहुशोदृष्टमेवेत्याह तैस्तैरिति यन्नोदुर्विषहमशक्यंकर्म तद्भगवान्स्वयमेवकरोतिहि ४६ ६ ६ ६

ननु बहिर्मुखानामिवत्वद्भक्तानामस्माकंत्वय्यर्पितानिपूर्वपुण्यानिविपरीतफलानिभवितुमर्हंतीत्याह क्लेशोभूरियेषु अल्पंसारंफलंयेषु यद्वा विफलान्येवसकामानांकर्माणि तथापि
तंतुननयंति ४७ तत्रवैफल्यमुपपादयति अवमः अल्पोऽपिकर्मकल्पः कर्माभासोपिईश्वरार्पितश्चेद्विफलायासायनकल्पते हियस्मात्सएषईश्वरः पुरुषस्यात्मा अतएवदयितोहित
श्चनह्यात्मनिदयितेहितेचार्पितंनिष्फलंस्यात् ४८ अनंतफलत्वमाह यथाहिमूलावसेचनंस्कंधानांशाखानांचभवति ४९ एवंसत्यपित्वदर्पितकर्मणांत्वद्भक्तानामस्माकंयन्निमित्तमिदंदुः
खमितित्वमेववेत्सीत्याशयेनाह नमइति दुर्वितर्क्याण्यात्मकर्माणिस्वभावचेष्टितानियस्यतस्मै ५० इत्यष्टमेटीकायांपंचमोऽध्यायः ५ षष्ठेपुनस्तुतिविष्णावाविर्भूतेसुरैःसह
कृता तन्मंत्रेणासुरैःसाकममृतार्थमहोद्यमः १ सहस्रार्काणामुदयेद्युतिरिवद्युतिर्यस्य १ महसातेजसाप्रतिहतानीक्षणानिचक्षूंषियेषां २ तामाविर्भूतांतनुंविरंचोदृष्ट्वातुष्टावेतिपं-
चमेनान्वयः कंजगर्भवदरुणेईक्षणेयस्याः ३ तप्तहेमवदवदातेनपीतेनलसताकौशेयवाससायुक्तां प्रसन्नानिचारूणिसर्वाण्यंगानियस्याः शोभनंमुखंयस्याः सुंदरेभ्रुवौयस्याः ४ महा

क्लेशभूर्यल्पसाराणिकर्माणिविफलानिच देहिनांविषयार्तानांनतथैवार्पितंत्वयि ४७ नावमःकर्मकल्पोऽपिविफलायेश्वरार्पितः कल्पतेपुरु
षस्यैवसह्यात्मादयितोहितः ४८ यथाहिस्कंधशाखानांतरोर्मूलावसेचनम् एवमाराधनंविष्णोःसर्वेषामात्मनश्चहि ४९ नमस्तुभ्यमनंताय
दुर्वितर्क्यात्मकर्मणे निर्गुणायगुणेशायसत्वस्थायचसांप्रतम् ५० इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेअमृतमथनेनामपंचमोऽध्यायः ५
श्रीशुकउवाच एवंस्तुतःसुरगणैर्भगवान्हरिरीश्वरः तेषामाविरभूद्राजन्सहस्रार्कोदयद्युतिः १ तेनैवमहसासर्वेदेवाःप्रतिहते
क्षणाः नापश्यन्खंदिशःक्षोणीमात्मानंचकुतोविभुम् २ विरंचोभगवान्दृष्ट्वासहशर्वेणतांतनुम् स्वच्छांमरकतश्यामांकंजगर्भारुणे
क्षणाम् ३ तप्तहेमावदातेनलसत्कौशेयवाससा प्रसन्नचारुसर्वांगींसुमुखींसुंदरभ्रुवम् ४ महामणिकिरीटेनकेयूराभ्यांचभूषिताम्
कर्णाभरणनिर्भातकपोलश्रीमुखांबुजाम् ५ कांचीकलापवलयहारनूपुरशोभिताम् कौस्तुभाभरणांलक्ष्मींबिभ्रतींवनमालिनीम् ६ सु
दर्शनादिभिःस्वास्त्रैर्मूर्तिमद्भिरुपासिताम् तुष्टावदेवप्रवरःसशर्वःपुरुषंपरम् सर्वामरगणैःसाकंसर्वांगैरवनिंगतैः ७ ब्रह्मोवाच
अजातजन्मस्थितिसंयमायागुणायनिर्वाणसुखार्णवाय अणोरणिम्नेऽपरिगण्यधाम्नेमहानुभावायनमोनमस्ते ८ रूपंतवैतत्पुरुषर्ष
भेज्यंश्रेयोर्थिभिर्वैदिकतांत्रिकेण योगेनधातःसहनस्त्रिलोकान्पश्याम्यमुष्मिन्नुहविश्वमूर्तौ ९ तोमणयोयस्मिन्तेनकिरीटेनकर्णाभरणेकुंड

लेताभ्यांनिर्भातौयौकपोलौताभ्यांश्रीर्मुखांबुजेयस्याः ५ कौस्तुभः आभरणंकंठेयस्याः लक्ष्मींवक्षसिबिभ्रतीम् ६ देवप्रवरोब्रह्मा सर्वांगैरवनिंगतैः साष्टांगप्रणतैः अनाविर्भावेयस्मा
भूताः सूरिदितिब्रुवन् ब्रह्मादिभिर्भाविनित्यत्वविशुद्धेभगवत्तनोः ७ श्रीमूर्तेरयमाविर्भावएव नतस्मादादिवत्जन्मादितवास्तीत्याह नजाताजन्मादयोयस्यकुतः अगुणायअतःनिर्वा
णसुखस्यार्णवाय अपारमोक्षसुखस्वरूपायेत्यर्थः तथाऽपिअणोरप्यणिम्नेअतिसूक्ष्मायदुर्ज्ञेयत्वात् वस्तुतस्तुअपरिगण्यमियत्तातीतंधाममूर्तिर्यस्यतस्मै तच्चैतदसंभावित
म् यतः महानाचिंत्योऽनुभावोयस्यतस्मै ८ तन्मूर्तेःसनातनत्वमपरिमेयत्वंचोपपादयति रूपमिति हेपुरुषर्षभ हेधातः एतत्तवरूपंवैदिकेनतांत्रिकेणचयोगेनोपायेन
श्रेयोर्थिभिःसदाइज्यंपूज्यमतोनेदमिदानीमपूर्वंजातमितिभावः ननुयूयंदेवाःपूज्यत्वेनप्रसिद्धाःसत्यम् सर्वेऽपिअत्रैवांतर्भूताइत्याह उ अहोहस्फुटम् अमुष्मिंस्त्वयि
नोऽस्मांस्त्रीन्लोकांश्चसहपश्यामि तत्रहेतुः विश्वंमूर्तौयस्य अतस्त्वत्तद्रूपंपरिच्छिन्नमपिनभवतीत्यर्थः ९ ५ ६ ६ ६

तथालमस्यजगतः तत्रहेतुः परस्मात् प्रधानादपिपरः १० मृत्तिकादृष्टांतेन परिणामंप्राप्तंवारयति त्व
विश्वमूर्तित्वमेवाह त्वयीति घटस्यमृत्तिकायथाआदिरंतश्चमध्यंच तथालमस्यजगतः शास्त्रज्ञाः ११ एतदेवसदृष्टांतमाह यथाऽग्निंकाष्ठे
मिति स्वमायास्वाधीनया अत एवगुणानांव्यवाये परिणामेऽप्यगुणमेवत्वांयुक्ताः पश्यंति मनीषिणो विवेकिनः विपश्चितः शास्त्रज्ञाः ११ एतदेवसदृष्टांतमाह यथाऽग्निंकाष्ठे
मथनेन अमृतमाज्यंगोषु दोहनादिना भुवि अन्नंव्रीह्यादिकर्षणादिना अंबुखननेन उद्यमनेपुरुषकारेवाणिज्यादिनाद्याभिर्जीविकांयद्वा अंबुनःउद्यमनेघटीयंत्रादिनोद्धर-
णेयोगैरुपायैर्मनुष्याः अधियंतिप्राप्नुवंति तथाकवयस्त्वांबुद्ध्यागुणेष्वधियंतिवदंतिच १२ हेनाथसरोजनाभ अतिचिरादीप्सितमर्थंयोगैकप्राप्यंत्वांसम्युज्झिहानमाविर्भवंतंप्रत्यक्षतोदृष्ट्वा
ऽवयंनिर्वृतिंगताः दवार्तादावाग्निपीडिताः १३ यद्विधेयंतत्कथयेति चेत्तत्राह हेअंतरात्मन् अशेषसासाक्षिणस्तेबहिः किंवान्यैर्विज्ञाप्यमस्ति यूयमेवकिंचित्कुरुतेतिचेत्तत्राह अहमि

त्वंमाययात्मा-
श्रयायास्वयंदमसीदमसृजदिदंमात्मतंत्रे त्वमादिरंतोजगतोस्यमध्यंघटस्यमृत्स्नेवपरः परस्मात् १०
त्वय्यग्रआसीत्त्वयिमध्यआसीत्त्वय्यंतआसीदिदमात्मतंत्रे ...पश्यंतियुक्तामनसामनीषिणागुणव्यवायेप्यगुणंविपश्चितः ११ यथाऽग्निमेधस्यमृतंचगोषुभु
व्यन्नमंबूद्यमनेचवृत्तिम् योगैर्मनुष्या अधियंतिहित्वांगुणेषुबुद्ध्याकवयोवदंति १२ तंत्वांवयंनाथसमुज्जिहानंसरोजनाभातिचिरे
प्सितार्थं दृष्ट्वागतानिर्वृतिमद्यसर्वेगजादवार्ताइवगांगमंभः १३ सत्वंविधत्स्वाखिललोकपालावयंयदर्थास्तवपादमूलम् समागता
स्तेबहिरंतरात्मन् किंचान्यविज्ञाप्यमशेषसाक्षिणः १४ अहंगिरित्रश्चसुरादयोयेदक्षादयोग्नेरिवकेतवस्ते किंवाविदामेशपृथग्वि
भातांविधत्स्वशंनोद्विजदेवमंत्रम् १५ श्रीशुकउवाच एवंविरिंच्यादिभिरीडितस्तद्विज्ञायतेषांहृदयंयथैव जगादजीमूतग
भीरयागिराबद्धांजलीन्संवृतसर्वकारकान् १६ एकएवेश्वरस्तस्मिन्सुरकार्येसुरेश्वरः विहर्तुकामस्तानाहसमुद्रोन्मथनादिभिः १७
श्रीभगवानुवाच हंतब्रह्मन्नहोशंभोहेदेवाममभाषितम् शृणुतावहिताःसर्वेश्रेयोवःस्याद्यथासुराः १८ यातदानवदितेयैस्तावत्संधि-
र्विधीयताम् कालेनानुगृहीतैस्तैर्यावद्वोभवआत्मनः १९ अरयोऽपिहिसंधेयाःसतिकार्यार्थगौरवे अहिमूषकवद्देवाअर्थस्यपदवींगतैः २०
अमृतोत्पादनेयत्नःक्रियतामविलंबितम् यस्यपीतस्यवैजंतुर्मृत्युग्रस्तोऽमरोभवेत् २१ क्षिप्त्वाक्षीरोदधौसर्वावीरुत्तृणलतौषधीः मंथानं
मंदरंकृत्वानेत्रंकृत्वातुवासुकिम् २२ सहायेनमयादेवानिर्मंथध्वमतंद्रिताः क्लेशभाजोभविष्यंतिदैत्यायूयंफलग्रहाः २३

ति अग्नेः केतवोविस्फुलिंगाइ
वतेत्वत्तोवयंपृथग्विभाताःसंतःआत्मनः शंश्रेयः किंवाविद्मः अतस्त्वमेवद्विजानांदेवानांचमंत्रंविधत्स्व इदंकुरुतेत्युपायमुपदिशेत्यर्थः १५ हृदयंमंत्रउपदेष्टव्यइत्य
भिप्रेतं यथैवतथैवविज्ञायजगाद संवृतानिनियमितानिसर्वाणिकारकाणींद्रियाणियैस्तान् १६ ईश्वरस्यापितथैवाभिप्रेतमित्याह एकएवेश्वरः समर्थोऽपि १७ हेसुराः
हेदेवाः अन्येचगंधर्वादयः १८ वः आत्मनोयावद्भवोवृद्धिर्भवति १९ अर्थस्यप्रयोजनस्य पदवींसिद्धिंप्राप्तैः पश्चादहिमूषकवत् वध्यघातकभावेनवर्तितव्यमितिशेषः यद्वा
पेटिकायांनिरुद्धोऽहिर्यथानिर्गमद्वारविधानार्थंप्रथमंमूषकेणसंधिंविधत्ते पश्चात्तमेवकदाचित्भक्षयति तथाअर्थमार्गप्रवृत्तैःप्रथमंसंधेयाइत्यर्थः २० ततस्तैःसहयत्नकार्यंतदाह
अमृतोत्पादनइति यस्यअमृतस्यपीतस्यसतःअमरोभवेत् मृत्युग्रस्तोऽपि २१ नेत्रंरज्जुम् २२ अतंद्रिताःसंयत्ताःनिर्मंथध्वमिति ननुतर्हितेऽप्यमृतपानेनामराःस्युस्तत्राह क्लेशभा
जइति २३

बलिभिः सहकारिभिः साध्या अर्थास्तदनुसरणं विनानासिध्यंतीति कृत्वासामादिकमुपदिशति यूयमिति द्वाभ्यां हे सुराः संरंभेण संभ्रमेण सांत्वयासाममार्गेण यथासिध्यंति २४ चक्रु
षुमथनादुत्पन्नेषु २५ २६ सुरास्तु बलिमुपेयुः उपजग्मुः २७ असंयत्तानपि दृष्ट्वा श्लोक्यः कीर्त्यर्हः २८ वैरोचनिंबलिं जितमशेषं त्रैलोक्यं येन तम् २९ तत्सर्वममृतोन्मथनादि ३०
तत्रये अन्ये चासुराधिपाः पौलोमकालेयादयः शंबरादयश्च तेभ्यश्चारोचत ३१ संविदं समयम् ३२ परिघा इव बाहवो येषाम् ३३ ३४ ३५ ३६ ३७ ३८ विसर्जितः प्रस्थापितः

यूयं तदनुमोदध्वं यदिच्छंत्यसुराः सुराः न संरंभेण सिध्यंति सर्वेऽर्थाः सांत्वया यथा २४ न भेतव्यं कालकूटाद्विषाज्जलधिसंभवात् लोभः कार्यो न वो
जातु रोषः कामस्तु वस्तुषु २५ श्रीशुक उवाच इति देवान्समादिश्य भगवान्पुरुषोत्तमः तेषामंतर्दधे राजन्स्वच्छंदगतिरीश्वरः २६ अथ
तस्मै भगवते नमस्कृत्य पितामहः भवश्च जग्मतुः स्वं स्वं धामोपेयुर्बलिं सुराः २७ दृष्ट्वारीनप्यसंयत्तान्जातक्षोभान्स्वनायकान् न्यषेधद्दैत्यराट्
श्लोक्यः संधिविग्रहकालवित् २८ ते वैरोचनिमासीनं गुप्तं चासुरयूथपैः श्रिया परमया जुष्टं जिताशेषमुपागमन् २९ महेंद्रः श्लक्ष्णया वाचा सांत्वयि
त्वा महामतिः अभ्यभाषत तत्सर्वं शिक्षितं पुरुषोत्तमात् ३० तद्रोचत दैत्यस्य तत्रान्ये येऽसुराधिपाः शंबरोऽरिष्टनेमिश्च ये च त्रिपुरवासिनः ३१
ततो देवासुराः कृत्वा संविदं कृतसौहृदाः उद्यमं परमं चक्रुरमृतार्थे परंतप ३२ ततस्ते मंदरगिरिमोजसोत्पाट्य दुर्मदाः नदंत उदधिं निन्युः शक्ताः
परिघबाहवः ३३ दूरभारोद्वहश्रांताः शक्रवैरोचनादयः अपारयंतस्तं वोढुं विवशा विजहुः पथि ३४ निपतन्स गिरिस्तत्र बहूनमरदानवान्
चूर्णयामास महता भारेण कनकाचलः ३५ तांस्तथा भग्नमनसो भग्नबाहूरुकंधरान् विज्ञाय भगवांस्तत्र बभूव गरुडध्वजः ३६ गिरिपातविनि
ष्पिष्टान्विलोक्यामरदानवान् ईक्षया जीवयामास निर्जरान्निर्व्रणान्यथा ३७ गिरिं चारोप्य गरुडे हस्तेनैकेन लीलया आरुह्य प्रययावब्धिं सु
रासुरगणैर्वृतः ३८ अवरोप्य गिरिं स्कंधात्सुपर्णः पततां वरः ययौ जलांत उत्सृज्य हरिणा स विसर्जितः ३९ इति श्रीभागवते महापुराणे अ
ष्टमस्कंधे अमृतमथने मंदराचलानयनं नाम षष्ठोऽध्यायः ६ श्रीशुक उवाच ते नागराजमामंत्र्य फलभागेन वासुकिम् परिवीय गिरौ
तस्मिन्नेत्रमब्धिं मुदान्विताः १ आरेभिरे सुसंयत्ता अमृतार्थं कुरूद्वह हरिः पुरस्ताज्जगृहे पूर्वं देवास्ततोऽभवन् २ तन्नैच्छन्दैत्यपतयो महा
पुरुषचेष्टितम् न गृण्हीमो वयं पुच्छमहेरंगममंगलम् ३ स्वाध्यायश्रुतसंपन्नाः प्रख्याता जन्मकर्मभिः इति तूष्णीं स्थितान्दैत्यान्विलोक्य पुरुषोत्त
मः ४ स्मयमानो विसृज्याग्रं पुच्छं जग्राह सामरः कृतस्थानविभागास्त एवं कश्यपनंदनाः ५ ममंथुः परमायत्ता अमृतार्थं पयोनिधिम् मध्यमानेऽर्ण
वे सोऽद्रिरनाधारो ह्यपोऽविशत् ६ ध्रियमाणोऽपि बलिभिर्गौरवात्पांडुनंदन ते सुनिर्विण्णमनसः परिम्लानमुखश्रियः आसन्स्वपौरुषे नष्टे दैवे
नातिबलीयसा ७ विलोक्य विघ्नेशविधिं तदेश्वरो दुरंतवीर्योऽवितथाभिसंधिः कृत्वा वपुः काच्छपमद्भुतं महत्प्रविश्य तोयं गिरिमुज्जहार ८

सुपर्णेन तत्र स्थितेन वासुकेरागमनायोगादिति भावः ३९ इत्यष्टमे टीकायां षष्ठोऽध्यायः ६ सप्तमे मथनोद्भूतविषभीत्याऽखिलैर्जनैः स्तुतः सन्कृपयारुद्रः पपौ विषमितीर्यते १
फलभागेन तवाप्यमृते भागो भविष्यतीति आमंत्र्य संमंत्र्य वासुकिं नेत्रं गिरौ परिवीय संवेष्ट्य आब्धिं मथितुमारेभिरे वासुकेर्मुखं तत्र दैत्यान्ग्राहयितुमेव पूर्वं हरिः पुरस्ताज्जगृहे
ततोऽभवन्मुखं न गृहुः १ २ ३ ४ कृतो धारणे स्थानविभागो यैः ५ ६ दैवेन हेतुना स्वपौरुषे नष्टे सति ७ विघ्नेशस्य विधिं तेन रचितं विघ्नं अवितथः सत्योऽभिसंधिः संकल्पो यस्य ८

लक्षयोजनः प्रस्तारः विस्तारोस्यास्तीति तथा तेन पृष्ठेन ९ तस्य गिरेः आवर्तनं भ्रमणमङ्गकण्डूयनं मेने १० आसुरेण असुराकारेण दैवेन देवाकारेण रूपेणाविशत् ११ १२ आत्मनि दे
वदैत्यमध्ये गोत्रे दारुकरूपेण नेत्रे अभेद्याबोधरूपेण परेण हरिणा क्षोभितं नक्राणां चक्रं समूहो यस्मिन् १३ दृशश्च मुखानि च श्वासाश्च अहीन्द्रस्य साहस्रसमपरिमिताः कठोरा येषु
गादयः तेभ्यो निर्गताः श्वासाग्निधूमाः तैराहतवर्चोऽपगतं येषां ते सरला द्रुमविशेषाः १४ देवांश्च भगवद्वशा घनाः समभ्यवर्षन् समुद्रोर्मिभिः उपगूढा वायवश्च शीतला ववुः वांति स्म कथंभू
तान् तस्याहीन्द्रस्य श्वासशिखाग्निभिः हृता प्रभा येषां धूम्राण्यम्बरादीनि येषां १५ १६ धृतोऽद्रिर्येन स धृताद्रिः भगवान् परमपुरुषः अनन्तरमशोभतेत्यन्वयः कथंभूतः कनक
परिधिः पीतवासा कर्णयोर्विद्योतमाना विद्युत्कुंडललक्षणा यस्य तथा मूर्ध्नि भ्राजन्तो विलुलिताः कचा यस्य स तथा जैत्रैर्जिष्णुभिर्दोर्भिः दन्दशूकं सर्पम् प्रतिगिरिः प्रतिद्वन्द्वी पर्वतः १७ हा

तमुत्थितं वीक्ष्य कुलाचलं पुनः समुत्थिता निर्मथितुं सुरासुराः दधार पृष्ठेन स लक्षयोजनप्रस्तारिणा द्वीप इवापरो महान् ९ सुरासुरेन्द्रैर्भुजवीर्य
वेपितं परिभ्रमन्तं गिरिमङ्ग पृष्ठतः बिभ्रत्तदावर्तनमादिकच्छपो मेनेऽङ्गकण्डूयनमप्रमेयः १० तथाऽसुरानाविशदासुरेण रूपेण तेषां बलवीर्यमीरयन्
उद्दीपयन्देवगणांश्च विष्णुर्दैवेन नागेन्द्रमबोधरूपतः ११ उपर्यगेन्द्रं गिरिराडिवान्य आक्रम्य हस्तेन सहस्रबाहुः तस्थौ दिवि ब्रह्मभवेन्द्रमुख्यैरभिष्टुव
द्भिः सुमनोऽभिवृष्टः १२ उपर्यधश्चात्मनि गोत्रनेत्रयोः परेण ते प्राविशता समेधिताः ममन्थुरब्धिं तरसा मदोत्कटा महाद्रिणा क्षोभितनक्रचक्रम् १३
अहीन्द्रसाहस्रकठोरदृङ्मुखश्वासाग्निधूमाहतवर्चसोऽसुराः पौलोमकालेयबलील्वलादयो दवाग्निदग्धाः सरला इवाभवन् १४ देवांश्च तच्छ्वासशि
खाहतप्रभान्धूम्राम्बरस्रग्वरकञ्चुकाननान् समभ्यवर्षन्भगवद्वशा घना ववुः समुद्रोर्म्युपगूढवायवः १५ मथ्यमानात्तथा सिन्धोर्देवासुरवरूथपैः य
दा सुधा न जायेत निर्ममन्थाजितः स्वयम् १६ मेघश्यामः कनकपरिधिः कर्णविद्योतविद्युन्मूर्ध्नि भ्राजद्विलुलितकचः स्रग्धरो रक्तनेत्रः जैत्रैर्दोर्भिर्जगदभय
दैर्दन्दशूकं गृहीत्वा मथ्नन्मथ्ना प्रतिगिरिरिवाशोभताथो धृताद्रिः १७ निर्मथ्यमानादुदधेरभूद्विषं महोल्बणं हालहलाह्वमग्रतः संभ्रान्तमीनोन्मकरादि
कच्छपात्तिमिद्विपग्राहतिमिंगिलाकुलात् १८ तदुग्रवेगं दिशि दिश्युपर्यधो विसर्पदुत्सर्पदसह्यमप्रति भीताः प्रजा दुद्रुवुरङ्ग सेश्वरा अरक्ष्यमाणाः शर
णं सदाशिवम् १९ विलोक्य तं देववरं त्रिलोक्या भवाय देव्याऽभिमतं मुनीनाम् आसीनमद्रावपवर्गहेतोस्तपो जुषाणं स्तुतिभिः प्रणेमुः २० प्रजा
पतय ऊचुः देवदेव महादेव भूतात्मन्भूतभावन त्राहि नः शरणापन्नांस्त्रैलोक्यदहनाद्विषात् २१ त्वमेकः सर्वजगत ईश्वरो बन्धमोक्षयोः तं
त्वामर्चन्ति कुशलाः प्रपन्नार्तिहरं गुरुम् २२ गुणमय्या स्वशक्त्याऽस्य सर्गस्थित्यप्ययान्विभो धत्से यदा स्वदृग्भूमन् ब्रह्मविष्णुशिवाभिधाम् २३

लहलमित्याख्या नाम यस्य संभ्रान्ता मीना उद्धता मकरादयश्च यस्मिन् तस्मात् तिम्यादिभिराकुलाच्चेति तद्विषमप्रति अप्रतिमं प्रतिक्रियाशून्यमिति वा १८ कुतः उग्रो वेगो यस्य
तदेवाह दिशि दिशीति यद्वा उग्रो वेगो रोमांचस्वेदादयो यस्मात् अत एवासह्यं विलोक्य भीताः अन्येन केनाप्यरक्ष्यमाणाः सदाशिवं शरणं दुद्रुवुः जग्मुः १९ त्रिलोक्या उ-
द्भवाय देव्या सह अद्रौ कैलासे आसीनम् तथापि मुनीनामभिमतं तेषामेवापवर्गाय तपो जुषाणम् २० २१ निर्गुणं सगुणं चैव शिवं हरिपराक्रमैः स्तुवंतस्ते प्रजेशा नाना
मन्यंतानंतयोः २२ नन्वेवंभूतो विष्णुरिति प्रसिद्धं तत्राहुः गुणमय्येति अस्य जगतो यदा सर्गादीन् धत्से तदा हे भूमन् स्वदृक् स्वतः सिद्धज्ञानस्त्वं ब्रह्मादिसंज्ञां धत्से
२३ श्रीगोपीजनवल्लभाय श्रीकृष्णाय नमः

तत्रहेतुः त्वंब्रह्मेति सदसतोर्भावान् देवतिर्यगादिरूपान् भावयतीतितथा सृज्यंतुत्वद्व्यतिरिक्तंनास्तीत्याहुः आत्मैवत्वंनानाशक्तिभिर्जगद्रूपेणाभातः तस्मादीश्वरः २४ स्वतः
सिद्धज्ञानत्वमुपपादयंतः जगदात्मना आभानप्रकारमाहुः त्वंशब्दस्य वेदस्ययोनिः अतः स्वतःसिद्धज्ञानः त्वंजगदादिर्महत्तत्त्वम् आत्माच अहंकारः कथंभूतः प्राणेंद्रियद्रव्या-
णां कारणभूतागुणायस्य राजसादित्रिविधइत्यर्थः स्वभावादयश्च त्वमेवक्रतुः संकल्पः सत्यमृतंचेतियोधर्मः सत्वं महदादिस्वरूपत्वेहेतुः त्रिवृत्त्रिगुणात्मकंयदक्षरंप्रधानंत्व
यित्वदाश्रयंतदामनंति यद्वा एवंभूतेत्वयित्रिवृदक्षरंप्रणवंप्रकाशकमाहुरित्यर्थः २५ अखिलदेवतात्मा अग्निः सर्वादेवताइतिश्रुतेः सोग्निस्तेमुखं हेलोकभव द्वितीयांतेषु
विदुरित्यस्यसंबंधः २६ परेअवरेचये आत्मानोजीवास्तेषामाश्रयस्त्वमात्माऽहंकारः २७ त्रयीमयात्मन्वेदत्रयमूर्ते २८ पंचोपनिषदः तत्पुरुषाघोरसद्योजातवामदेवेशानरू
पामंत्रा येर्मुखैरष्टोत्तरत्रिंशन्मंत्राणांवर्गः तेषामेवमंत्राणांपदच्छेदेनाष्टोत्तरत्रिंशत्कलात्मकामंत्राइत्यर्थः अवस्थितिःउपरतावस्था २९ अधर्मस्योर्मिषुदंभलोभादिषुयैरूर्मि-
भिर्विसर्गः संहारः यद्वा यैः सत्वादिभिर्विविधः सर्गः तानिनेत्रत्रयम् हेदेव छंदोमयः सतवेक्षाईक्षणम् साक्षान्मनुरितिपाठेमनुरितिवेदः तदेवाह छंदोमयइति ३० हेगिरि

त्वंब्रह्मपरमंगुह्यं सदसद्भावभावनः नानाशक्तिभिराभातस्त्वमात्माजगदीश्वरः २४ त्वंशब्दयोनिर्जगदादिरात्माप्राणेंद्रियद्रव्यगुणःस्वभावः
कालःक्रतुःसत्यमृतंचधर्मस्त्वय्यक्षरंयत्त्रिवृदामनंति २५ अग्निर्मुखंतेऽखिलदेवतात्माक्षितिंविदुर्लोकभवांघ्रिपंकजम् कालंगतिंतेऽखिलदेवता
त्मनोदिशश्चकर्णौरसनंजलेशम् २६ नाभिर्नभस्तेश्वसनंनभस्वान्सूर्यश्चचक्षूंषिजलंस्मरेतः परावरात्माश्रयणंतवात्मा सोमोमनोद्यौर्भगवन्शिरस्ते
२७ कुक्षिःसमुद्रागिरयोऽस्थिसंघारोमाणिसर्वौषधिवीरुधस्ते छंदांसिसाक्षात्तवसप्तधातवस्त्रयीमयात्मन्हृदयंसर्वधर्मः २८ मुखानिपंचोपनिषदस्तवे
शस्त्रिंशदष्टोत्तरमंत्रवर्गः यत्तच्छिवाख्यंपरमार्थतत्त्वंदेवःस्वयंज्योतिरवस्थितिस्ते २९ छायात्वधर्मोर्मिषुयैर्विसर्गोनेत्रत्रयंसत्वरजस्तमांसि साक्षा
न्मनुःशास्त्रकृतस्तवेक्षाछंदोमयोदेवऋषिःपुराणः ३० नतेगिरित्राखिललोकपालविरिंचवैकुंठसुरेंद्रगम्यम् ज्योतिःपरंयत्ररजस्तमश्चसत्वंनयद्ब्र
ह्मनिरस्तभेदम् ३१ कामाध्वरत्रिपुरकालगराद्यनेकभूतद्रुहःक्षपयतःस्तुतयेनतत्ते यस्त्वंतकालइदमात्मकृतंस्वनेत्रवह्निस्फुलिंगशिखयाभसितंन
वेद ३२ यत्त्वात्मरामगुरुभिर्हृदिचिंतितांघ्रिद्वंद्वंचरंतमुमयातपसाभितप्तम् कत्थंतउग्रपरुषंनिरतंश्मशानेतेनूनमूतिमविदंस्तवहातलज्जाः ३३ त
त्स्यतेसदसतोःपरतःपरस्यनांजःस्वरूपगमनेप्रभवंतिभूम्नः ब्रह्मादयःकिमुतसंस्तवनेवयंतुतत्सर्गसर्गविषयाअपिशक्तिमात्रम् ३४ अतेपरंज्योतिरखिलानां

लोकपालादीनांगम्यंनभवति कुतः यत्ररजआदिर्नास्ति किंतत् ज्योतिः यन्निरस्तभेदंब्रह्म ३१ कामश्च अध्वरश्च दक्षयज्ञः त्रिपुरादयश्च येअनेकभूतद्रुहस्तान् क्षपयतः संहरतस्तेतत्कर्मस्तुतयेन
भवति अल्पत्वमेतादित्यर्थः गरभक्षणस्याप्यवश्यंभावित्वेनसिद्धवन्निर्देशः स्तुतयेअलंनभवतीत्यत्रहेतुः यस्त्वंभवान्स्वनेत्रवह्निविस्फुलिंगस्यशिखया इदंजगद्भसितंभस्मसात्जातंनवेदनालो
चयत्यपि ३२ तदेवंनित्यपरानुग्रहव्यग्रंत्वांयेनिंदंतितेऽतिमूर्खाइत्याहुः येतुउमयासहचरंतंतस्यांनिरतंरतंकामिनंकल्पयंतेभलपंतितयाश्मशानेचरंतमुग्रंक्रूरंपरुषंचहिंस्रंकत्थंते कथंभूतं आत्मा
रामाश्चतेगुरवश्चविश्वहितोपदेष्टारस्तेर्हृदिचिंतितमंघ्रिद्वंद्वंयस्य तथाभूतंमायेतपसाऽभितप्तंसमापितंनूनंतवोतिमविदंतितिकाकुः त्वल्लीलांनैवविदुरित्यर्थः अतोहातलज्जाः त्यक्तत्रपाः कथमात्मारा
मैः सेवितचरणयुगलस्यतेकामित्वंसंभवति कथंवातपसा अभितप्तस्यशांतस्योग्रत्वंपरुषत्वंवासंभवतीत्यविचार्यैवप्रलपंतीत्यर्थः ३३ आस्तांतावन्निंदकानांवार्ता महांतोपितवतत्त्वंनजानंतीत्याहुः त
स्मात्तवरूपस्यगमनेज्ञानेब्रह्मादयोपिनसमर्थाः संस्तवनेतुकुतःशक्ताःस्युः तत्रवयंकथंप्रभवामः यतस्तेषांसर्गेअत्यंतार्वाचीनाः तथाऽपियदेतत्तवस्तवनमेतदात्मशक्तिपरिमितमात्रमित्यर्थः ३४

नदेवाहुः एतत्परमिति नपरंरूपंतथाऽपिलदर्शनादेवकृतार्थावयमित्याहुः मृडनायहीति ३५ ३६ मत्प्रभावमविचार्याविषपानेप्रवृत्तंमांकथंचिदियंप्रियावारयेदितिशंकयातामनुज्ञापय
न्नाह अहोबतेतिसार्द्धैश्चतुर्भिः वैशसंदुःखं ३७ प्राणपरीप्सूनांप्राणरक्षणेप्सूनांममेमया प्रभोःसमर्थस्यअर्थःकार्यं ३८ किंच बद्धवैरेषुभूतेषु परस्परंजिघांसत्सु ३९ कृपयतःकृपां
कुर्वतःपुंसः ४० मेमत्तःस्वस्तिःशोभनासत्ता सुखेनजीवितमास्त्वित्यर्थः ४१ जग्धुमत्तुम् करतलीकृत्य करतलपरिमितमात्रंकृत्वा ४२ जलकल्मषःजलदोषोविषम् ४३ यस्मात्तंग
लेनीलंचकार ४४ ४५ प्रस्कन्नंगलितं अपरेयेसविषाःतेऽपिजगृहुः अनेनविषस्यतीव्रतोक्ता ४६ इत्यष्टमस्कंधेटीकायांसप्तमोऽध्यायः ७ अष्टमेमथ्यमानेऽब्धौलक्ष्म्या

एतत्परंप्रपश्यामोनपरंतेमहेश्वर मृडनायहिलोकस्यव्यक्तिस्तेऽव्यक्तकर्मणः ३५ श्रीशुकउवाच तद्वीक्ष्यव्यसनंतासांकृपयाभृशपीडितः
सर्वभूतसुहृद्देवइदमाहसतींप्रियाम् ३६ शिवउवाच अहोबतभवान्येतत्प्रजानांपश्यवैशसम् क्षीरोदमथनोद्भूतात्कालकूटादुपस्थि
तम् ३७ आसांप्राणपरीप्सूनांविधेयमभयंहिमे एतावान्हिप्रभोरर्थोयद्दीनपरिपालनम् ३८ प्राणैःस्वैःप्राणिनःपांतिसाधवःक्षणभंगुरैः बद्धवैरेषुभू
तेषुमोहितेष्वात्ममायया ३९ पुंसःकृपयतोभद्रेसर्वात्माप्रीयतेहरिः प्रीतेहरौभगवतिप्रीयेऽहंसचराचरः ४० तस्मादिदंगरंभुंजेप्रजानांस्वस्तिरस्तुमे
एवमामंत्र्यभगवान्भवानींविश्वभावनः ४१ तद्विषंजग्धुमारेभेप्रभावज्ञाऽन्वमोदत ततःकरतलीकृत्यव्यापिहालाहलंविषम् ४२ अभक्षयन्महा
देवःकृपयाभूतभावनः तस्यापिदर्शयामासस्ववीर्यंजलकल्मषः ४३ यच्चकारगलेनीलंतच्चसाधोर्विभूषणम् तप्यंतेलोकतापेनसाधवःप्रायशोजनाः
४४ परमाराधनंतद्धिपुरुषस्याखिलात्मनः ४४ निशम्यकर्मतच्छंभोर्देवदेवस्यमीढुषः प्रजादाक्षायणीब्रह्मावैकुंठश्चशशंसिरे ४५ प्रस्क
न्नंपिबतःपाणेर्यत्किंचिज्जगृहुःस्मतत् वृश्चिकाहिविषौषध्योदंदशूकाश्चयेपरे ४६ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेअमृतमथने
सप्तमोऽध्यायः ७ श्रीशुकउवाच पीतेगरेवृषांकेणप्रीतास्तेऽमरदानवाः ममंथुस्तरसासिंधुंहविर्धानीततोऽभवत् १ तामग्निहोत्री
मृषयोजगृहुर्ब्रह्मवादिनः यज्ञस्यदेवयानस्यमेध्यायहविषेनृप २ ततउच्चैःश्रवानामहयोऽभूच्चंद्रपांडुरः तस्मिन्बलिःस्पृहांचक्रेनेंद्रईश्व
रशिक्षया ३ ततऐरावतोनामवारणेंद्रोविनिर्गतः दंतैश्चतुर्भिःश्वेताद्रेर्हरन्भगवतोमहिम् ४ कौस्तुभाख्यमभूद्रत्नंपद्मरागोमहोदधेः
तस्मिन्हरिःस्पृहांचक्रेवक्षोऽलंकरणेमणौ ५ ततोऽभवत्पारिजातःसुरलोकविभूषणम् पूरयत्यर्थिनोयोऽर्थैःशश्वद्भुवियथाभवान् ६ त
तश्चाप्सरसोजातानिष्ककंठ्यःसुवाससः रमण्यःस्वर्गिणांवल्गुगतिलीलावलोकनैः ७ ततश्चाविरभूत्साक्षाच्छ्रीरमाभगवत्परा रं
जयंतीदिशःकांत्याविद्युत्सौदामनीयथा ८ तस्यांचक्रुःस्पृहांसर्वेससुरासुरमानवाः रूपौदार्यवयोवर्णमहिमाक्षिप्तचेतसः ९

विष्णौहेतोस्तैः धन्वंतरेर्हतेसोमेमोहिन्युद्भवईर्यते १ हविर्धानीसुरभिः १ देवयानस्यब्रह्मलोकमार्गप्रापकस्ययज्ञस्यसंबंधिनोहविषे २ ईश्वरनशिक्षयाप्रागेवकृतया
३ भगवतोयःश्वेताद्रिःकैलासस्तस्यमहिमामहिमानम् दंतैःशिखरकल्पैः हरन्चंद्रवत्पांडुरइत्यनुषंगः ४ ५ ६ वल्गुभिर्गत्यादिभिःस्वर्गिणांरमण्यःरतिकर्त्र्यः
७ सुदामापर्वतःतत्रैकस्यांदिशिजातासौदामनी स्फटिकादिमयागिरिशृंगेष्वधिकंस्फुरंतीविद्युदिवकांत्यादिशोरंजयतीश्रीः संपत्साक्षान्मूर्तिधारिणीसतीसैव भग
वत्पररमा आविरभूदित्यर्थः ८ तस्यारूपादिमहिम्नाआक्षिप्तंचेतोयेषाम् ९ छ छ छ छ छ छ

भगवद्वक्षसि स्थितया श्रिया विलोकितानां सुराणां यथापूर्वं संपत्प्राप्तिम् असुराणां च तद्विपर्ययं वक्तुम् अभिषेकादिमहोत्सवपूर्वकं ब्रह्मादिपरिहारेण भगवत्प्राप्तिप्रकारमाह तस्या-
आसनमित्यादिना अथासौ द्वाविंशत्या श्लोकैः प्राक्तनेन ग्रंथेन १० आभिषेचनिकाः अभिषेकोचिताः पंच पवित्राणि पंचगव्यानि मधुमाधवौ चैत्रवैशाखभवं फलपुष्पादि पाठांतरे
पिदं द्वेस्येस एवार्थः मधुमासे भवं माध्वि तिवा ११ अभिषेकम् अभिषेकोचितं विधिम् नद्यः नटानां स्त्रियः १२ शंखवेणुवीणाश्च व्यनादयन् तुमुलो निस्वनो येषां तान् मृदंगादीन् १३ १४
१५ १६ १७ १८ पदमाश्रयम् ध्रुवं नित्यम् अव्यभिचारिणो नित्याः संतो गुणा यस्मिन् तं नान्वविंदत क्वचित्तस्याचिह्नेषस्य सद्भावात् १९ तदेवाह नूनमिति त्रिभिः मन्युनिर्जयो ना-
स्ति दुर्वासःप्रभृतिषु गुरुशुक्रादिषु संगवर्जितं ज्ञानं नास्ति महत्त्वेऽपि ब्रह्मसोमादौ न कामनिर्जयः परतो व्यपाश्रयः परापेक्ष इंद्रादिः स किमीश्वरः २० न भूतसौहृदं परशुरामादिषु न
मुक्तिकारणं त्यागः शिवप्रभृतिषु पुंसः कार्तवीर्यादेर्वीर्यमस्ति अजवेगानिह्नुतं कालवेगेन परिहृतं तत्तु न भवति गुणसंगवर्जितः सनकादिः द्वितीयः मम वरो न हि समाधिर्निष्ठ

तस्या आसनमानिन्ये महेंद्रो महदद्भुतम् मूर्तिमत्यः सरिच्छ्रेष्ठा हेमकुंभैर्जलं शुचि १० आभिषेचनिका भूमिराहरत्सकलौषधीः गावः पं
चपवित्राणि वसंतो मधुमाधवौ ११ ऋषयः कल्पयांचक्रुरभिषेकं यथाविधि जगुर्भद्राणि गंधर्वा नट्यश्च ननृतुर्जगुः १२ मेघा मृदंगपणव-
मुरजानकगोमुखान् व्यनादयन् शंखवेणुवीणास्तुमुलनिस्वनान् १३ ततोऽभिषिषिचुर्देवीं श्रियं पद्मकरां सतीम् दिगिभाः पूर्णकलशैः
सूक्तवाक्यैर्द्विजेरितैः १४ समुद्रः पीतकौशेयवाससी समुपाहरत् वरुणः स्रजं वैजयंतीं मधुना मत्तषट्पदाम् १५ भूषणानि विचित्राणि वि
श्वकर्मा प्रजापतिः हारं सरस्वती पद्ममजो नागाश्च कुंडले १६ ततः कृतस्वस्त्ययनोत्पलस्रजं नदद्द्विरेफां परिगृह्य पाणिना चचाल वक्त्रं सुक
पोलकुंडलं सव्रीडहासं दधती सुशोभनं १७ स्तनद्वयं चातिकृशोदरी समं निरंतरं चंदनकुंकुमोक्षितम् ततस्ततो नूपुरवल्गु शिंजितैर्विसर्प
ती हेमलतेव सा बभौ १८ विलोकयंती निरवद्यमात्मनः पदं ध्रुवं चाव्यभिचारिसद्गुणम् गंधर्वयक्षासुरसिद्धचारणत्रैविष्टपेयादिषु ना
न्वविंदत १९ नूनं तपो यस्य न मन्युनिर्जयो ज्ञानं क्वचित्तच्च न संगवर्जितम् कश्चिन्महांस्तस्य न कामनिर्जयः स ईश्वरः किं परतो व्यपाश्रयः २० ध
र्मः क्वचित्तत्र न भूतसौहृदं त्यागः क्वचित्तत्र न मुक्तिकारणम् वीर्यं न पुंसोऽस्त्यजवेगनिष्कृतं न हि द्वितीयो गुणसंगवर्जितः २१ क्वचिच्चिरायुर्न हि शील
मंगलं क्वचित्तदप्यस्ति न वेद्यमायुषः यत्रोभयं कुत्र च सोऽप्यमंगलः सुमंगलः कश्च न कांक्षते हि माम् २२ एवं विमृश्याव्यभिचारिसद्गुणैर्वरं निजैकाश्रय
तयागुणाश्रयम् वव्रे वरं सर्वगुणैरपेक्षितं रमा मुकुंदं निरपेक्षमीप्सितम् २३

तत्वात् २१ चिरायुष्यपि मार्कंडेयादौ शीलमंगलं नास्ति इंद्रियदमनशीलत्वात् क्वचित्तद-
प्यस्ति हिरण्यकशिपुप्रभृतौ आयुषः स्थैर्यं न वेद्यं दुर्ज्ञातं भगवद्द्वेषेण कस्मादेव मृत्युसंभवात् यत्र कुत्र च श्रीरुद्रे मार्कंडेयादिवत् इंद्रियदमनाद्यभावात् शीलमंगलं चायुर्निश्चयश्चे-
त्युभयमस्ति न चान्यः पूर्वोक्तः कश्चिद्दोषः तथापि सोऽप्यमंगलः श्मशानवासाद्यमंगलचेष्टितः श्रीमुकुंदलक्षीकृत्याह कश्चेति कश्चित्सुमंगलः निरवद्यश्च स तु मां न हि कांक्षते आत्मा
रामत्वात् २२ एवं विमृश्य समानिरपेक्षमपि मुकुंदमेव वरं वव्रे तत्किमव्यभिचारिभिः सद्भिः धर्मज्ञानादिभिर्गुणैर्निजैकाश्रयतया च नैरपेक्ष्येण वरं सर्वोत्तमं तत्र हेतुः अगुणाश्रयं सत्त्व
निर्गुणातीतं पाठांतरेऽप्ययमेवार्थः अत एव स्वस्य ईप्सितं किं च सर्वैर्गुणैरणिमादिभिरपेक्षितमेतं अयं भावः यद्यपि स्वयमात्मारामत्वेनान्यानिरपेक्षः तथाऽप्याश्रिता अणिमादि
सिद्धयो यथा नोपेक्षते तद्वन्मामपि नोपेक्षेत तावतैव तत्सेवया ऽहं कृतार्था स्यां किमन्यैः प्राकृतैरिति तमेव वृतवतीति २३

तस्यांसदेशेकमनीयांनवकंजमालांनिधाय तदनुग्रहंप्रतीक्षमाणातूष्णींतस्यानिकटेतस्थौ कथंभूतांमालां मायंतोयेमधुव्रताः तेषांवरूथस्यगिरा उपघुष्टांनादितां क
तदेवाह तस्यांसदेशेकमनीयांनवकंजमालांनिधाय तदनुग्रहंप्रतीक्षमाणातूष्णीं तस्यानिकटेतस्थौ २४ भगवानपित्रैलोक्याभिवृद्धयेस्ववक्षस्तस्याःस्थानंददावित्याह तस्या
यंभूताश्रीः सव्रीडहासेनाविकसन्नयनेनतेनतस्यउरःस्वधामयातासती वक्षःप्रतीक्षमाणास्तस्यावित्यर्थः २४ भगवानपित्रैलोक्याभिवृद्धयेस्ववक्षस्तस्याःस्थानंददावित्याह तस्या
इति विशिष्टाभूतयोविभवास्तस्याः तथात्रिजगतोजनन्याःश्रियः परमंसकास्थिरमैधयत अवर्द्धयत् २५ २६ तल्लिंगैःविष्णुप्रतिपादकैः अवितथैर्यथार्थैः २७ २८ २९ वारुणीवरु
पार्देवस्यंयदन्नंतन्मयीसुरा ३० ३१ दीर्घौपीवरौदोर्दंडौयस्य कंबुग्रीवः शंखनाभिरिव त्रिरेखासकृत्तायग्रीवायस्य ३२स्निग्धःकुंचितःकेशानामंतोयस्य ३३ ३४ इज्यभाक्यज्ञभागभो

तस्यैनिधायनिकटेतदुरःस्वधामसव्रीडहासविकसन्नयनेनयाता। २४
तस्यांसदेशउशतींनवकंजमालांमाद्यन्मधुव्रतवरूथगिरोपघुष्टाम्। तस्यैनिधायनिकटेतदुरःस्वधामसव्रीडहासविकसन्नयनेनयाता। २४ ... साधिपतींस्त्रिलोका
तस्याःश्रियस्त्रिजगतोजगतोजनन्यावक्षोनिवासमकरोत्परमंविभूतेः श्रीःस्वाःप्रजाःसकरुणेननिरीक्षणेन यत्रस्थितैधयतसाधिपतींस्त्रिलोकाः
ननु २५ शंखतूर्यमृदंगानांवादित्राणांपृथुःस्वनः देवानुगानांसस्त्रीणांनृत्यतांगायतामभूत् २६ ब्रह्मरुद्रांगिरोमुख्याःसर्वेविश्वसृजोविभुम् ई
डिरेऽवितथैर्मंत्रैस्तल्लिंगैःपुष्पवर्षिणः २७ श्रियाविलोकितादेवाःसप्रजापतयःप्रजाः शीलादिगुणसंपन्नालेभिरेनिर्वृतिंपराम् २८ निःसत्त्वालो
लुपाराजन्निरुद्योगागतत्रपाः यदाचोपेक्षितालक्ष्म्याबभूवुर्दैत्यदानवाः २९ अथासीद्वारुणीदेवीकन्याकमललोचना असुराजगृहुस्तांवै ह
रेरनुमतेनते ३० अथोदधेर्मथ्यमानात्काश्यपैरमृतार्थिभिः उदतिष्ठन्महाराजपुरुषःपरमाद्भुतः ३१ दीर्घपीवरदोर्दंडःकंबुग्रीवोरुणेक्षणः श्या
मलस्तरुणःस्रग्वीसर्वाभरणभूषितः ३२ पीतवासामहोरस्कःसुमृष्टमणिकुंडलः स्निग्धकुंचितकेशांतःसुभगःसिंहविक्रमः ३३ अमृताप्
र्णकलशंबिभ्रद्वलयभूषितः सवैभगवतःसाक्षाद्विष्णोरंशांशसंभवः ३४ धन्वंतरिरितिख्यातआयुर्वेददृगिज्यभाक् तमालोक्यासुराःस
र्वेकलशंचामृताभृतम् ३५ लिप्संतःसर्ववस्तूनिकलशंतरसाहरन् नीयमानेऽसुरैस्तस्मिन्कलशेऽमृतभाजने ३६ विषण्णमनसोदेवाहरिं
शरणमाययुः इतितद्दैन्यमालोक्यभगवान्भृत्यकामकृत् मारिवद्यतमिथोऽर्थंवःसाधयिष्येस्वमायया ३७ मिथःकलिरभूत्तेषांतदर्थेतर्षचे
तसाम् अहंपूर्वमहंपूर्वंनत्वंनत्वमितिप्रभो ३८ देवाःस्वंभागमर्हंतियेतुल्यायासहेतवः सत्रयागइवैतस्मिन्नेषधर्मःसनातनः ३९ इति
स्वान्प्रत्यषेधन्वैदैतेयाजातमत्सराः दुर्बलाःप्रबलान्राजन्गृहीतकलशान्मुहुः ४० एतस्मिन्नंतरेविष्णुःसर्वोपायविदीश्वरः योषिद्रूपम
निर्देश्यंदधारपरमाद्भुतम् ४१ प्रेक्षणीयोत्पलश्यामंसर्वावयवसुंदरम् समानकर्णाभरणंसुकपोलोन्नसाननम् ४२ नवयौवननिर्वृत्तस्तनभारकृशोदरम् मुखामोदानुरक्तालिझंकारोद्विग्नलोचनम् ४३

तस्ताभ्यांस्तनभारकृशोदरम् सुखामोदानुरक्तालिझंकारोद्विग्नलोचनम् ४३ सुधाअमृतेन आभृतंपरिपूर्णम् ३५ ३६ मिथःदैत्यानांपरस्परंकलहो
त्पादनेन योगमायया च मोहिन्यावोऽर्थंसाधयिष्यामि अतोमाखिद्यतेत्याहेतिशेषः ३७ तदेवाह मिथइति तर्षःकामःतद्युक्तानिचेतांसियेषाम् इत्येवंसमबलानांकलि
रभूत् ३८ दुर्बलानांत्वाक्रोशप्रकारमाह देवाइतिद्वाभ्याम् येदेवाःतुल्येनायासेनहेतवःसाधकाः तुल्यायासोहेतुश्चधनादिर्येषामितिवा सत्रयागेयथासर्वेषांसम-
फलंतद्वत् तथाचश्रुतिः ऋद्धिकामाःसत्रमासीरन्निति येयजमानास्तेऋत्विजइति ३९ ४० ४१ तद्रूपंवर्णयतिपंचभिः प्रेक्षणीयमुत्पलमिवश्यामम् सर्वेष्ववयवेषुसुंद
रम् समानयोःकर्णयोराभरणेयस्मिन् सुकपोलंचतदुत्तुंगनासिकंच आननंयस्मिन् ४२ नवयौवनानिर्वृत्तयोःस्तनयोर्भारेणचकृशमुदरंयस्मिन् ४३

सुग्रीवायास्मिन् कंठे आभरणं यस्मिन् तत् तच्च शोभनाग्रीवा येन तत् कंठाभरणं यस्मिन्निति वा सुभुजयोरंगदाभ्यां भूषितं ४४ विरजांबरेण संवीतो नितंब एव द्वीपः विशालत्वात् त च्छोभायस्याः तया कांच्या प्रकर्षेण विलसत् वल्गु यथा भवत्येवं चलतो श्वरणयोर्नूपुरे यस्मिन् ४५ सव्रीडेन स्मितेन सह विक्षिप्ता कंपिता या भ्रूः तस्या विलासेन सह यान्यवलोकितानि तैर्दैत्ययूथपानां चेतस्सु मुहुः कामं उद्दीपयन् ४६ इत्यष्टमे टीकायामष्टमोऽध्यायः ८ नवमे मोहिते दैत्यै रर्पिते ऽमृतभाजने तद्वंचनेन देवेभ्यो ऽमृतं दत्तं तते यर्यते १ १ अहो रूपं सौंदर्यं धाम कांतिः इति वदंतः का त्वमित्यादि पप्रच्छुः २ मथ्नंतीव क्षोभयंतीव ३ कस्यासीत्यस्योत्तरं सुक्तमस्माभिः यतस्त्वं न केनापि दृष्टा पूर्वेत्याहुः नेति द्वाभ्याम् त्वाममरा

बिभ्रत्स्वकेशभारेण मालामुत्फुल्लमल्लिकाम् सुग्रीवकंठाभरणं सुभुजांगदभूषितम् ४४ विरजांबरसंवीतनितंबद्वीपशोभया कांच्याप्रविल- सद्वल्गुचलच्चरणनूपुरम् ४५ सव्रीडस्मितविक्षिप्तभ्रूविलासावलोकनैः दैत्ययूथपचेतस्सु काममुद्दीपयन्मुहुः ४६ इति श्रीभागवते महापुराणे अष्टमस्कंधे अष्टमोऽध्यायः ८ श्रीशुक उवाच तेऽन्योन्यतोऽसुराः पात्रं हरंतस्त्यक्तसौहृदाः क्षिपंतो दस्युधर्माण आयांतीं ददृशुः स्त्रियम् १ अहो रूपमहो धाम अहो अस्या नवं वयः इति ते तामभिद्रुत्य पप्रच्छुर्जातहृच्छयाः २ का त्वं कंजपलाशाक्षि कुतो वा किं चिकीर्षसि कस्या सि वद वामोरु मथ्नंतीव मनांसि नः ३ न वयं त्वामरैर्दैत्यैः सिद्धगंधर्वचारणैः नास्पृष्टपूर्वां जानीमो लोकेशैश्च कुतो नृभिः ४ नूनं त्वं विधिना सु भ्रूः प्रेषितासि शरीरिणाम् सर्वेंद्रियमनःप्रीतिं विधातुं सघृणेन किम् ५ सा त्वं नः स्पर्द्धमानानामेकवस्तुनि मानिनि ज्ञातीनां बद्धवैराणां शं विधत्स्व सुमध्यमे ६ वयं कश्यपदायादा भ्रातरः कृतपौरुषाः विभजस्व यथान्यायं नैव भेदो यथा भवेत् ७ इत्युपामंत्रितो दैत्यैर्मायायोषिद्व पुर्हरिः प्रहस्य रुचिरापांगैर्निरीक्षन्निदमब्रवीत् ८ श्रीभगवानुवाच कथं कश्यपदायादाः पुंश्चल्यां मयि संगताः विश्वासं पंडि तो जातु कामिनीषु न याति हि ९ सालावृकाणां स्त्रीणां च स्वैरिणीनां सुरद्विषः सख्यान्याहुरनित्यानि नूत्नं नूत्नं विचिन्वताम् १० श्रीशु क उवाच इति ते क्ष्वेलितैस्तस्या आश्वस्तमनसोऽसुराः जहसुर्भावगंभीरं ददुश्चामृतभाजनम् ११ ततो गृहीत्वामृतभाजनं हरिर्बभा ष ईषत्स्मितशोभया गिरा यद्यभ्युपेतं क्व च साध्वसाधु वा कृतं मया वो विभजे सुधामिमाम् १२ इत्यभिव्याहृतं तस्या आकर्ण्यासुरपुंगवाः अप्रमा णविदस्तस्यास्तत्तथेत्यन्वमंसत १३ अथोपोष्य कृतस्नाना हुत्वा च हविषानलम् दत्वा गोविप्रभूतेभ्यः कृतस्वस्त्ययना द्विजैः १४ यथोपजोषं वासांसि परिधायाहतानि ते कुशेषु प्राविशन् सर्वे प्रागग्रेष्वभिभूषिताः १५ प्राङ्मुखेषूपविष्टेषु सुरेषु दितिजेषु च धूपामोदितशालायां जुष्टायां माल्यदीपकैः १६

दिभिरस्पृष्टपूर्वां न जानीमः इति न अपि तु जानीम एव ४ आस्तामिदं त्वद्दर्शनं त्वीश्वरेणैव संपादितमित्याहुः नूनमिति सर्वें द्रियाणां मनसश्च प्रीतिं विधातुं सघृणेन प्रेषिताऽसि किं वा यदृच्छयागतासि नैवं नूनं प्रेषितैवेत्यर्थः ५ ६ भेदो विग्रहो यथा न भवेत्तथा ७ ८ संगताः अनुसृताः ९ हे सुरद्विषः १० भावेन केनाप्यभिप्रायेण गंभीरं यथा भवत्येवं जहसुः ११ ईषत्स्मितेन शोभा यस्याः तया मया कृतं साधु वा असाधु यद्यभ्युपेत अंगीकुरुत तर्हि विभ जे १२ असुरपुंगवाः दैत्यश्रेष्ठाः प्रमाणमियत्तामजानंतः १३ १४ यथोपजोषं यथाप्रीति अहतस्य लक्षणम् अहतं यंत्रनिर्मुक्तमुक्तं वासः स्वयंभुवा शस्तं त न्मांगलिके ष्वतावन्मात्रेण सर्वदा प्रागग्रेषु कुशेषु विविशुः १५ धूपैरामोदितायां सुरभीकृतायां शालायाम् १६

अथ तस्यां शालायां हे नरेंद्र सा कलशपाणिराविवेश कथंभूता मणिबंधादाकानिष्ठं करस्य करभो बहिः करभसदृशौ स्फुरत्तावूरू यस्याः सा उशत्कमनीयं दुकूलं यस्मिन् तेन श्रोणीतटेनाथ
शालपाश्रोण्या अलसा मदागतिर्यस्याः पाठांतरे करभसदृशयोरूर्वोः लसद्दुकूलं यस्याः सा चासौ श्रोणीतटेन अलसगतिश्च मदेन विह्वले अक्षिणी यस्याः १७ तां स्त्रियः सखीं वीक्ष्य दे-
वासुराः संमुमुहुः कथंभूताम् कनकमये कुंडले यस्याः सा चासौ चारवः कर्णादयो यस्याः सा च ताम् विगलितः स्रस्तः स्तनपट्टिकाया अंतो यस्याः १८ एवं तान्मोहयित्वा यत्कृतवानृतदा-
हात्रिभिः असुराणां सुधादानं सर्पाणां क्षीरदानमिव दुर्नयमन्याय्यं मत्वा तां सुधां तेभ्यो न व्यभजत् अयंभावः दैत्यैर्मदीयं साध्वसाधु वा सर्वमनुमतमेवातो मद्भक्तान् देवानेव सुधां पाय-
यिष्यामि किंच तैर्यथान्यायं विभजस्वेत्युक्तं न चैतेभ्यो जात्यैव क्रूरेभ्यो दानं न्याय्यम् अतस्तेभ्यः सुधां न दद्यामिति १९ पंक्तीः पृथक् विविक्ताः कल्पयित्वा विधाय तासु पंक्तिषु स्वेषु स्वेषु त-
ज्जातीयेषु तांश्च असुरानपि प्रतारणार्थमेवोपवेशयामास २० उपसंचरैः बहुमानप्रियवाक्यादिना ताननतिक्रम्यातिक्रम्य गमनैर्दूरस्थानपि देवान् २१ तया कृतः स्नेहोऽपेषु स्त्रिया स-
हविवादस्य जुगुप्सया २२ कृताः अतिप्रणयः स्नेहो यैः प्रणयापाये न कातराः भीताः एते तावत्कृपणाः पूर्वं किंचित्पिबंतु यूयं तु धीराः क्षणं प्रतीक्षध्वमित्यादि बहुमानेन आबद्धाः नियंत्रिताः स-

तस्यां नरेंद्र करभोरुरुशद्दुकूलश्रोणीतटालसगतिर्मदविह्वलाक्षी साकूजती कनकनूपुरसिंजितेन कुंभस्तनी कलशपाणिरथाविवेश १७ तां श्रीसखीं क-
नककुंडलचारुकर्णनासाकपोलवदनां परदेवताख्याम् संवीक्ष्य संमुमुहुरुत्स्मितवीक्षणेन देवासुरा विगलितस्तनपट्टिकांताम् १८ असुराणां सुधादा-
नं सर्पाणामिव दुर्नयम् मत्वा जातिनृशंसानां न तां व्यभजदच्युतः १९ कल्पयित्वा पृथक्पंक्तीरुभयेषां जगत्पतिः तांश्चोपवेशयामास स्वेषु स्वेषु च पंक्तिषु
२० दैत्यान्गृहीतकलशो वंचयन्नुपसंचरैः दूरस्थान्पाययामास जरामृत्युहरां सुधाम् २१ ते पालयंतः समयमसुराः स्वकृतं नृप तूष्णीमासन्कृतस्नेहाः स्त्री-
विवादजुगुप्सया २२ तस्यां कृतातिप्रणयाः प्रणयापायकातराः बहुमानेन चाबद्धा नोचुः किंचन विप्रियम् २३ देवलिंगप्रतिच्छन्नः स्वर्भानुर्देवसंसदि
प्रविष्टः सोममपिबच्चंद्रार्काभ्यां च सूचितः २४ चक्रेण क्षुरधारेण जहार पिबतः शिरः हरिस्तस्य कबंधस्तु सुधयाप्लावितोऽपतत् २५ शिरस्त्वमरतां
नीतमजो ग्रहमचीकॢपत् यस्तु पर्वणि चंद्रार्कावभिधावति वैरधीः २६ पीतप्रायेऽमृते देवैर्भगवान्लोकभावनः पश्यतामसुरेंद्राणां स्वं रूपं जगृहे ह-
रिः २७ एवं सुरासुरगणाः समदेशकालहेत्वर्थकर्ममतयोऽपि फले विकल्पाः तत्रामृतं सुरगणाः फलमंजसापुर्यत्पादपंकजरजःश्रयणान्न दैत्याः २८
यद्युज्यतेऽसुवसुकर्ममनोवचोभिर्देहात्मजादिषु नृभिस्तदसत्पृथक्त्वात् तैरेव सद्भवति यत्क्रियतेऽपृथक्त्वात्सर्वस्य तद्भवति मूलनिषेचनं यत् २९

मयपालनादिभिः षड्भिरेतैः कारणैः अप्रियं किंचिदपि नोचुः किंतु तूष्णीमासन् २३ देवपंक्तौ चंद्रार्कयोर्मध्ये प्रविष्टः सोमममृतमपिबत् २४ हरिस्तस्य शिरो जहार अप्लावितः असंस्पृष्टः २५
ग्रहः सूर्यादिवत् ग्रहत्वाधिकारिणं २६ २७ हरिभक्तानामेवायमः फलति नान्येषामित्येवमाख्यानतात्पर्यमाह एवमिति समा देशादयो येषाम् हेतुर्मंदराद्रिः अर्थः समुद्रे क्षिप्तं वीरुदादि विविधः
कल्पः फलदृष्ट्या विज्ञातं केषांचिन्नेति वैचित्र्यं येषां ते फलवैषम्यवंतो बभूवुरित्यर्थः तदेवाह तत्र तेषु यस्य पादपंकजरजःश्रयणात् देवा अमृतं फलमापुः स एव सेव्य इत्यर्थः यत्तदोर्नित्य-
संबंधात् २८ एतदेवोपपादयति यदिति असुः प्राणः वसु धनं प्राणादिभिर्देहात्मजादिषु नृभिर्यद्युज्यते प्रयुज्यते देहाद्यर्थं यत्क्रियत इत्यर्थः तदसत् व्यर्थं भवति कुतः पृथक्त्वात् भे-
दाश्रयत्वात् शाखानिषेचनवत् तैरेव प्राणादिभिरीश्वरोद्देशेन यत्क्रियते तत्तु सन्महाफलं भवति अपृथक्त्वात् ईश्वरस्य सर्वत्रानुगतत्वात् तत्र दृष्टांतः यत्तरोर्मूलनिषेचनं तद्य-
था सर्वस्य स्कंधशाखादेरपि भवतीति यद्वात्मप्रपंचयोः पृथक्त्वं पर्यालोच्य भेददृष्ट्या देहाद्युद्देशेन यत्क्रियते तदसत् अपृथक्त्वं पर्यालोच्य ईश्वरदृष्ट्या तैरेव तेषु वा यत्क्रियते तत्तु सद्भवतीति
शेषं समानम् २९

इतिश्रीभागवतेअष्टमस्कंधेटीकायांनवमोऽध्यायः ९ दशमेमत्सराद्दैत्यैरारब्धेतुमृधे सुरैः दैत्यमायाविषण्णेषुदेवेष्वाविर्बभौहरिः १ तदेवमम्रृतावाप्तिर्नाभक्तानामिति
स्थितम् भक्तमत्सरतःप्राणहानिःपुनरुदीर्यते २ १ २ ३ ४ रणःसंग्रामःउदन्वतःसमुद्रस्यरोधसितीरेबभूव ५ अन्योऽन्यंसमासाद्यनिजघ्नुः ६ ७ ८ ९ १० ११
१२ चित्रध्वजपटादिभिश्चवीराणांमालाभिश्चराजिभिर्देवदानववीराणांध्वजिन्योयादसांमालाभिःसागराविवरेजतुरितित्रयाणामन्वयः यादोभिरितिवा सितेरमलेरातप

इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेअमृतमथनेनवमोऽध्यायः ९ श्रीशुकउवाच इतिदानवदैतेयानाविंदन्नमृतंनृप युक्ताःकर्मणियत्ताश्चवासुदेवपराङ्मुखाः १ साधयित्वाऽमृतंराजन्पाययित्वास्वकान्सुरान् पश्यतांसर्वभूतानांययौगरुडवाहनः २ सपत्नानांपरामृद्धिंदृष्ट्वातेदितिनंदनाः अमृष्यमाणाउत्पेतुर्देवान्प्रत्युद्यतायुधाः ३ ततःसुरगणाःसर्वेसुधयापीतयैधिताः प्रतिसंयुयुधुःशस्त्रैर्नारायणपदाश्रयाः ४ तत्रदेवासुरोनामरणःपरमदारुणः रोधस्युदन्वतोराजंस्तुमुलोरोमहर्षणः ५ तत्रान्योन्यंसपत्नास्तेसंरब्धमनसोरणे समासाद्यासिभिर्बाणैर्निजघ्नुर्विविधायुधैः ६ शंखतूर्यमृदंगानांभेरीडमरिणांमहान् हस्त्यश्वरथपत्तीनांनदतांनिःस्वनोऽभवत् ७ रथिनोरथिभिस्तत्रपत्तिभिःसहपत्तयः हयाहयैरिभाश्चेभैःसमसज्जंतसंयुगे ८ उष्ट्रैःकेचिदिभैःकेचिदपरेयुयुधुःखरैः केचिद्गौरमृगैरृक्षैर्द्वीपिभिर्हरिभिर्भटाः ९ गृध्रैःकंकैर्बकैरन्येश्येनभासैस्तिमिंगिलैः शरभैर्महिषैःखड्गैर्गोवृषैर्गवयारुणैः १० शिवाभिराखुभिःकेचित्कृकलासैःशशैर्नरैः बस्तैरेकेकृष्णसारैर्हंसैरन्येचसूकरैः ११ अन्येजलस्थलखगैःसत्त्वैर्विकृतविग्रहैः सेनयोरुभयोराजन्विविशुस्तेऽग्रतोऽग्रतः १२ चित्रध्वजपटैराजन्नातपत्रैःसितामलैः महाधनैर्वज्रदंडैर्व्यजनैर्बार्हचामरैः १३ वातोद्धूतोत्तरोष्णीषैरर्चिर्भिर्वर्मभूषणैः स्फुरद्भिर्विशदैःशस्त्रैःसुतरांसूर्यरश्मिभिः १४ देवदानववीराणांध्वजिन्यौपांडुनंदन रेजतुर्वीरमालाभिर्यादसामिवसागरौ १५ वैरोचनोबलिःसंख्येसोऽसुराणांचमूपतिः यानंवैहायसंनाम कामगंमयनिर्मितम् १६ सर्वसांग्रामिकोपेतंसर्वाश्चर्यमयंप्रभो अप्रतर्क्यमनिर्देश्यंदृश्यमानमदर्शनम् १७ आस्थितस्तद्विमानाग्र्यंसर्वानीकाधिपैर्वृतः बालव्यजनछत्राग्र्यैरेजेचंद्रइवोदये १८ तस्यासन्सर्वतोयानैर्यूथानांपतयोऽसुराः नमुचिःशंबरोबाणोविप्रचित्तिरयोमुखः १९ द्विमूर्धाकालनाभोऽथप्रहेतिर्हेतिरिल्वलः शकुनिर्भूतसंतापोवज्रदंष्ट्रोविरोचनः २० हयग्रीवःशंकुशिराःकपिलोमेघदुंदुभिः तारकश्चक्रदृक्शुंभोनिशुंभोजंभउत्कलः २१ अरिष्टोऽरिष्टनेमिश्चमयश्चत्रिपुराधिपः अन्येपौलोमकालेयानिवातकवचादयः २२ अलब्धभागाःसोमस्यकेवलंक्लेशभागिनः सर्वएतेरणमुखेबहुशोनिर्जितामराः २३ सिंहनादान्विमुंचंतःशंखान्दध्मुर्महारवान् दृष्ट्वासपत्नानुत्सिक्तान्बलभित्कुपितोभृशम् २४ ऐरावतंदिक्करिणमारूढःशुशुभेस्वराट् यथास्रवत्प्रस्रवणमुदयाद्रिमहर्पतिः २५ तस्यासन्सर्वतोदेवानानावाहध्वजायुधाः लोकपालाःसहगणैर्वाय्वग्निवरुणादयः २६

बैश्चवार्हैश्चामरैश्चव्यजनैः १३ वातेनोद्धूतैरुत्तरीयैःउष्णीषैश्चसूर्यरश्मिभिःसुतरांस्फुरद्भिः १४
१५ असुराणांयाचमूःतस्याःपतिःसबलिर्यानमास्थितः १६ १७ उदयेउदयगिरिशिखरेस्थितःचंद्रइवविरेजइतित्रयाणामन्वयः १८ १९ २० २१ २२
२३ २४ स्रवंति प्रस्रवणानियस्मिन्नितिमदधारासादृश्यम् २५ नानावाहनादीनियेषांतेदेवाअसुराश्चमियोयुयुधुः २६ ६५ ६५ ६५

२७ द्वंद्वान्येवाह युयोधेतिसार्धैः अस्यतआस्यत् अयुध्यतेत्यर्थः २८ २९ सूर्योदेवएकएवशतेनबलिसुतैः बाणोज्येष्ठोयेषांतैः ३० निशुंभशुंभाभ्यांदेवी ३१ ३२ ३३ ३४
३५ ३६ आरोहंतीत्यारोहाः तैःसहिताः अन्येचवाहाः पूर्वंतु केवलंगजादयउक्ताः कथंभूतानिकृत्ताबाह्वादयोयेषाम् छिन्नानिध्वजादीनियेषांते ३७ तेषांदेवादीनांपदाघातैरथां-
गैश्वचूर्णितादायोधनात् रणभूमेःउत्थितोरेणुर्दिशः खंद्युमणिंचसूर्यं छादयंस्तदेवखादन्यवर्तत कथंभूतात् असृक्स्रुतिभिः रक्तक्षरणैःपरिप्लुतात् यद्वा परिप्लुवनान्निवर्ततेत्यर्थः

तेऽन्योन्यमभिसंसृत्य क्षिपंतोमर्मभिर्मिथः आह्वयंतोविशंतोऽग्रेयुयुधुर्द्वंद्वयोधिनः २७ युयोधबलिरिंद्रेणतारकेणगुहोऽस्यत वरुणोहेतिनायुध्य-
न्मित्रोराजन्प्रहेतिना २८ यमस्तुकालनाभेनविश्वकर्मामयेनवै शंबरोयुयुधेत्वष्ट्रासवित्रातुविरोचनः २९ अपराजितेननमुचिरश्विनौवृषपर्वणा
सूर्योबलिसुतैर्देवोबाणज्येष्ठैःशतेनच ३० राहुणाचतथासोमःपुलोम्नायुयुधेऽनिलः निशुंभशुंभयोर्देवीभद्रकालीतरस्विनी ३१ वृषाकपिस्तुजं-
भेनमहिषेणविभावसुः इल्वलःसहवातापिर्ब्रह्मपुत्रैररिंदम ३२ कामदेवेनदुर्मर्षउत्कलोमातृभिःसह बृहस्पतिश्चोशनसानरकेणशनैश्चरः ३३
मरुतोनिवातकवचैःकालेयैर्वसवोऽमराः विश्वेदेवास्तुपौलोमैरुद्राःक्रोधवशैःसह ३४ तएवमाजावसुराःसुरेंद्राद्वंद्वेनसंहत्यचयुध्यमानाः अन्यो-
ऽन्यमासाद्यनिजघ्नुरोजसाजिगीषवस्तीक्ष्णशरासितोमरैः ३५ भुशुंडिभिश्चक्रगदर्ष्टिपट्टिशैःशक्त्युल्मुकैःप्रासपरश्वधैरपि निस्त्रिंशभल्लैःपरिघैः
समुद्गरैःसभिंडिपालैश्चशिरांसिचिच्छिदुः ३६ गजास्तुरंगाःसरथाःपदातयःसारोहवाहाविविधाविखंडिताः निकृत्तबाहूरुशिरोधरांघ्रयश्छिन्नध्वज-
ष्वासतनुत्रभूषणाः ३७ तेषांपदाघातरथांगचूर्णितादायोधनादुल्बणउत्थितस्तदा रेणुर्दिशःखंद्युमणिंचछादयन्न्यवर्ततासृक्स्रुतिभिःपरिप्लुतात्
३८ शिरोभिरुद्धूतकिरीटकुंडलैःसंरंभदृग्भिःपरिदष्टदच्छदैः महाभुजैःसाभरणैःसहायुधैःसाप्रास्तृताभूःकरभोरुभिर्बभौ ३९ कबंधास्तत्रचोत्पेतुः
पतितस्वशिरोऽक्षिभिः उद्यतायुधदोर्दंडैराधावंतोभटान्मृधे ४० बलिर्महेंद्रंदशभिस्त्रिभिरैरावतंशरैः चतुर्भिश्चतुरोवाहानेकेनारोहमार्च्छ-
यत् ४१ सतानापततःशक्रस्तावद्भिःशीघ्रविक्रमः चिच्छेदनिशितैर्भल्लैरसंप्राप्तान्हसन्निव ४२ तस्यकर्मोत्तमंवीक्ष्यदुर्मर्षःशक्तिमाददे तां
ज्वलंतींमहोल्काभांहस्तस्थामच्छिनद्धरिः ४३ ततःशूलंततःप्रासंततस्तोमरमृष्टयः यद्यच्छस्त्रंसमादद्यात्सर्वंतदच्छिनद्विभुः ४४ ससर्जाथासु-
रींमायामंतर्धानगतोऽसुरः ततःप्रादुरभूच्छैलःसुरानीकोपरिप्रभो ४५ ततोनिपेतुस्तरवोदह्यमानादवाग्निना शिलाःसटंकशिखराश्चूर्णयंत्यो
द्विषद्बलम् ४६ महोरगाःसमुत्पेतुर्दंदशूकाःसवृश्चिकाः सिंहव्याघ्रवराहाश्चमर्दयंतोमहागजान् ४७ यातुधान्यश्चशतशःशूलहस्ताविवाससः
छिंधिभिंधीतिवादिन्यस्तथारक्षोगणाःप्रभो ४८ ततोमहाघनाव्योम्निगंभीरपरुषस्वनाः अंगारान्मुमुचुर्वातैराहतास्तनयित्नवः ४९

त भावेक्तः रक्तधाराणांतत्पर्यंतमुच्छलनादित्यर्थः प्रथमांतपाठेरेणोर्विशेषणम् ३८ शिरोभिर्महाभुजैश्च करभसदृशैरूरुभिश्च सारणभूः प्रकर्षेणआस्तृतासतीबभौ-
कथंभूतैःशिरोभिः उद्धूतानि उत्पातितानिकिरीटानिकुंडलानिचयेभ्यः तैःसंरंभयुक्ताःदृशोयेषुतैः परिदष्टादच्छदाओष्ठायेषुतैः ३९ पतितानियानिस्वाशिरांसितत्र-
स्थैरक्षिभिः तैःपश्यंतइत्यर्थः उद्यतान्यायुधानियैःतैर्दोर्दंडैर्युक्ताः वाहान् ऐरावतपादरक्षकान् आरोहंगजयंतारमार्च्छयत्विव्याध ४१ ४२ दुर्मर्षःअसहनोबलिः ४३
४४ ४५ टंकवत्तीक्ष्णाग्रैःशिखरैःसहिताः ४६ ४७ स्तनयित्नवश्च अंगारान्मुमुचुरित्यनुषंगः ४९ छ छ छ छ

